# श्वेतदूर्वा

लेखकः
डा० प्रभुनाथद्विवेदी

प्रकाशक
वाराणसेय संस्कृत संस्थान
वाराणसी

# श्वेतदूर्वा

## (संस्कृत-लघुकथा-सङ्ग्रहः)

*कथाकारः*

**डॉ० प्रभुनाथद्विवेदी**

उपाचार्यः, संस्कृतविभागः

महात्मा-गांधी-काशी-विद्यापीठम्,

वाराणसी




*प्रकाशकः*

**वाराणसेय संस्कृत संस्थान**

सी० २७ / ६४, जगतगंज, वाराणसी

❑ *प्रकाशक:*
**वाराणसेय संस्कृत संस्थान**
सी० २७/६४, जगतगंज,
वाराणसी – २२१ ००२

❑ प्रथमं संस्करणम् – ५०० प्रतिरूपाणि

❑ खिष्टाब्द १९९७





**मूल्यम् –** रू० ७०.००

❑ *मुद्रक :*
**आनन्द प्रिंटिंग प्रेस**
सी० २७/१७०-ए, जगतगंज,
वाराणसी – २२१ ००२

# आमुखम्

कथानामावर्जनवृत्तिर्हितकाम्या च विशेषकद्वयमिति सर्वजनीनसंविद् । प्राचीनकालादेव तत्र सतां व्यापारः प्रकल्पेते । इतिहासपुराणादिषूपयोजिता कथा पुरातनमप्याचष्टे, नवीनमप्यालिङ्गति, अनागतमपि दिशति । झटिति प्रकाशकत्वं गूढस्य सारतया विन्यासकलाकौशलेनाविकलमुदञ्चति ।आख्याने जनानामनुरक्तिः । कथाश्रवणमाहात्म्यं सर्वमतिशेते ।तत्र मञ्जुलरीत्याख्यानमपि परिगृहीतम्, चरितमपि समुपलालितम्, काव्यमप्युपासितम् । तस्माद् विशेषः । कविभिः कथारूपमाश्रित्य काव्यानि निर्मितानि । दृश्यते जगति तेषां समुल्लासः ।

वर्तमाने कथाविधानकं विविधवैशिष्ट्यसम्भूषितं विविधोद्भवेभ्यो विभ्राजते । साहित्यदिग्विभागेभ्योऽहमहमिकयागत्य संहतानि लक्षणानि संस्कृतकथास्वरूपं घटयन्ति ।क्वचित्तु कर्तृस्वभाववैचित्र्यप्रणुन्ना विशेषा अपि सङ्क्रामन्ति ।यथान्यभाषासु कथासाहित्यस्यावदानं सद्भिरुररीक्रियते तथैव संस्कृतेऽपि । अत्रापि समञ्जसं निर्वहणमनुभूयते ।

ललितमिदं साहित्यविधानं कथाप्रकृत्या विलसति। समुद्भाविताभिः समृद्धकथाभिरविरतमस्माकं साहित्यं पुष्यते। उपयोगाय विषयसम्भारः परिकल्पितस्तिष्ठति ।सहृदयानामवधानमपेक्ष्यते ।कथानकोपयोगे क्वचिद् योजनोदेति क्वचिच्च वक्रता । रीतिगतविशेषस्तु तत्त्वान्तरम् । कथासरित्सागरे सोमदेवस्यैवं प्रतिपत्तिः – 'अत्र कथारसाविघातेन काव्यांशस्य योजनोद्यमश्च नानाकथाजाल-स्मृतिसौकर्यसिद्धये न तु वैदग्ध्यख्यातिलोभाये'ति ।

प्रकृते डॉ० प्रभुनाथद्विवेदिना 'श्वेतदूर्वा' साधूपायनीक्रियते ।'कथाकौमुदी' पूर्वं प्राकाश्यं नीता ।प्रस्तुता कृतिः प्रशस्ता ।अस्याः संस्कृतकथासाहित्ये समादरो भविष्यतीति प्रत्ययः ।

**डॉ० अमरनाथपाण्डेयः**
आचार्योऽध्यक्षचरश्च
संस्कृत-विभागः
म. गां. काशीविद्यापीठम्, वाराणसी

विजयादशमी,
११.१०.९७

# शुभाशंसनम्

**व्यथापनोदाय कथानुसर्जनं यथार्थबोधार्थमथानुयुज्यते।**
**कवित्वकाव्यत्वकलानिदर्शनप्रदर्शनोद्यन्निकषोपलं यथा ॥**

'श्वेतदूर्वा' इत्येतत्प्रतीकायमाणनामाङ्कसङ्कलितं संस्कृताख्यानजगति सुख्यातयशोराशिना कमनीयसुरशेमुषीकथाशिल्पिना मदनुजकल्पेन डॉ० प्रभुनाथद्विवेदिना स्वीयकम्रतरप्रतिभानकल्पनाकलितं संस्कृतलघुकथासङ्ग्रहमहमापातदृष्टिक्षेपमद्राक्षम्। स्वरसरसभावानुकूलसरलसहजस्वाभाव्यभव्यभावनाप्रसरेण निगुम्फिताः सुमनोमनोमनोज्ञस्वोपज्ञप्रज्ञोपारूढघटमानघटनानुबद्धाः प्रशस्तरारसौरभ्यभास्वत्सुमनोमालिका इवैकविंशतिसंख्याकाः कथा नूनं संस्कृतसाहित्यश्रीसमृद्धिमातन्वाना सुचिरं सुकृतिनः स्वकृतिनो गौरवं संवर्धयिष्यन्तीति सुदृढं विश्वसिमि।

डॉ०प्रभुनाथद्विवेदी सम्प्रति वाराणसीस्थमहात्मगांधीकाशीविद्यापीठे संस्कृतविभागे उपाचार्यपदमधितिष्ठन् नवनवां कथासाहित्यसृष्टिं विदधानोऽधिकाशि तद्बहिश्चाधिकाशमानो मानोन्नतं स्थानमुन्नयन्नास्ते। वस्तुतो वस्तुनिष्ठा व्यक्तिनिष्ठाश्च विविधविधाधाराव्यवहृतिव्याहृतिप्रकृतिमेदुरा हास्यव्यङ्ग्योपदेश सन्देशनिर्भरा संवादसंल्लापपराः परार्थस्वार्थपरमार्थोन्मीलनसत्त्वराः सामाजिकसांस्कृतिकसांयोगिकसान्दानितकघटनोपस्काराः यथार्थप्रस्ताराः कथाः प्रणयता डॉ० द्विवेदिना सकलसहृदयसंवादभाजनीभूय भूयोभूतिमधिश्रित्य देदीप्यते। यद्यपि चतुरस्रमजस्रप्रवहद्विपुलसुरवाङ्मयगाङ्गाम्बुविमलधारायां सत्यामपि साम्प्रतिकनवीनशैलीककथासृष्टिसोपानपङ्क्तिनिर्मितिमिव प्रकुर्वाणो डॉ० द्विवेदिमहोदयो निश्चप्रचमशेषविदुषां निःशेषसाधुवादानर्हतीति निर्विचिकित्सं प्रत्यवैमि।

सातत्येन सौहित्येन चैष विपश्चिदपश्चिमो लेखकवरो वरणीयकथारचनावरिवस्यायामग्रेसरीभवन्नुज्ज्वलतरां कीर्तिकाष्ठामधिगच्छेदिति शुभाशंसनेन तदीयं सार्वदिक्कमभ्युदयं कामयमानो विशिष्यानिशं तद्रचनाचणत्वमुज्जृम्भतामिति परमात्मानमभ्यर्थये।

**शिवजी उपाध्यायः**
साहित्यविभागाध्यक्षः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

**शरत्पूर्णिमा,**
१५.१०.१९९७

# अस्मदीयम्

'कथाकौमुदी'त्येकादशलघुकथानां सङ्कलनं पूर्वमेव प्रकाशितमुत्तरप्रदेशसंस्कृत-अकादम्या च विशिष्टपुरस्कारेण सम्मानितम् । सम्प्रति 'श्वेतदूर्वा' इति द्वितीयमेकविंशतिलघुकथानां सङ्कलनमुपायनीक्रियते कथारसिकेभ्यः। तदानीं वाराणस्यामाकाशवाणीकेन्द्रेऽधिकारिपदभाजो देववाणीप्रणयिनः सम्मान्या डॉ० रजनीशप्रसादमिश्रमहोदया इदानीं प्रयागे आकाशवाणीकेन्द्रस्य निदेशकपदमलङ्कुर्वन्ति। डॉ० मिश्रमहोदयानां प्रेरणयैवारोपितेयं कथावाटिका साम्प्रतं पल्लविता पुष्पिता विभ्राजते यस्याः सुमनःसुगन्धिराकाशवाणीकेन्द्रेभ्यः प्रसारिताऽऽवर्जयति कथारसास्वादलुब्धानां श्रोतृमधुपानां मनांसि ।

कथाप्रणयने पथ्यं पाथेयमस्ति विद्यातपःपूतानां गभीरज्ञानाब्धिपारङ्गतानां भव्यकर्तृत्वभारतीकीर्तिभूषितानां विद्वद्वरेण्यानां काशीविद्यापीठस्थसंस्कृतविभागाध्यक्षचराणां परमश्रद्धेयगुरुवर्याणां प्रो० अमरनाथपाण्डेयमहाभागानामाशीर्वचनम् । सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचराणां सुरभारतीसेवासमर्पितानां कविसहृदयानां डॉ० राजदेवमिश्राणामपि च तत्रस्थसाहित्यविभागाध्यक्षपदभाजां सारस्वतयशोमण्डितानां प्रयतपण्डितानां महाकवीनां मदग्रजकल्पानामाचार्यवर्यश्रीशिवजी-उपाध्यायानां प्रोत्साहनैरेवास्ति कथायात्रोत्साहः। इयं 'श्वेतदूर्वा' यद्विशदतया विराजते तत्सर्वं तस्यैव विश्वविद्यालयस्य व्याकरणविभागाध्यक्षपदमलङ्कुर्वद्भिश्शब्दब्रह्मोपासकैः प्रो० श्रीकान्तपाण्डेयैः सुनिपुणं संशोध्य साधितम् । राष्ट्रियसंस्कृतसंस्थानस्योपनिदेशकैः डॉ० काशीनाथतिवारीमहोदयैः, उत्तरप्रदेशीय-राजकीयमहाविद्यालयप्राचार्यैः श्रीविद्याशङ्करत्रिपाठिभिः, काशीस्थ[illegible]महिला-महाविद्यालयस्य संस्कृतविभागाध्यक्षचरैः डॉ० कपिलदेवपाण्डेयैश्च कथाप्ररोहाः बहुधा सत्परामर्शजलेन सिक्ताः। एतेषां समेषां महानुभावानां मनःप्रसादो जनस्यास्य प्रणतिततिभिर्भवेदिति मनसोऽभिलाषः। सुधीभिर्मनोज्ञवाग्भूषितरागरञ्जित-

मुखैः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयप्रकाशननिदेशकैः डॉ० हरिश्चन्द्रमणि-त्रिपाठिभिः दत्तहस्तावलम्बेयं 'श्वेतदूर्वा' प्राकाश्यं नीतेत्येतान्महानुभावान् प्रति हार्दं कार्तज्ञं विज्ञापयत्ययं जनः। अन्ते च,

**दूर्वा श्यामाऽथवा श्वेता काण्डात्काण्डं प्ररोहति।**
**नैवेद्यं श्रीगणेशाय श्वेतदूर्वा प्रकल्पते॥**

**॥इति शुभमस्तु॥**

**शरत्पूर्णिमा**
१५.१०.९७

विदुषां वशंवदः
**प्रभुनाथद्विवेदी**

## ॥ समर्पणम् ॥

पावनकीर्तिकथाशेषयोः

स्वजनमनोरथकल्पवृक्षयोः

वात्सल्यसुधारसनिस्यन्दयोः

पूज्यजननीपदपङ्कजयोः

पुण्यस्मृतौ

समर्पयतीदं

सुमनोभावविमलं

'श्वेतदूर्वा'दलम्

कथाप्रयतः

श्रद्धाविनतः

सुतः

**प्रभुनाथः**

# ॥ कथानुक्रमः ॥

# ॥ श्वेतदूर्वा ॥

"सखे, किमिदं तव हस्ते ?" – सस्पृहमपृच्छद् गोपालः।

"पुस्तकमिदम्" – ईषद्विहस्य प्रोवाच मधुकरः।

"किं भवतीदं पुस्तकम् ?"

"न जानासि ? पुस्तकं पठ्यते।"

" किं नाम पठनम् ?"

"अहो! त्वमिदमपि न जानासि ?" किञ्चिद्विचिन्त्य मधुकरः पुनरुवाच – "किन्त्वहमपि त्वां कथं बोधयानि ? पठामीति खलु जानामि परन्तु पठनं नाम किम् ......., भवतु, एवं कथयामि। मम ग्रामेऽत्र नास्ति काचित्पाठशाला। नगरे सा भवति। तत्र मम शालायां बहवो बालकाः पठन्ति गुरवश्च पाठयन्ति।" – मधुकरो बालसुलभसारल्येन गोपालमब्रवीत् – "अत्र ग्रामे न कोऽपि पठति। त्वं जानास्येव, मे पिता नगरे क्वचिद् गृहरक्षकोऽस्ति। यदा गतवर्षे स गृहमागतवान् तदा मम मातरं मन्त्रितवान् – "मम स्वामिनः पुत्राः शालायां पठन्ति। ते कथयन्ति यदधुना निरक्षरः स्वीयामुन्नतिं कथमपि न विधास्यति। आधुनिके समाजे शिक्षायाः खलु न केवलमावश्यकताऽपि तु विशिष्टं महत्त्वं वर्तते। अतः सोऽपि स्वपुत्रं तत्र नीत्वा पाठयिष्यति।" ततश्च नगरप्रत्यावर्तनकाले मातुरश्रूण्युपेक्ष्य मामपि नीतवान्। तत्र पितुः स्वामिनः साहाय्येनाहमेकस्मिन् विद्यालये प्रविष्टः पठामि। सत्यं ब्रवीमि, प्रारम्भे तु मनो न रमते स्म किन्तु सम्प्रति बहवश्छात्रा मित्राणि सञ्जातानि। अस्मिन् वर्षे प्रथमां कक्षामुत्तीर्य द्वितीयकक्षायां गतोऽस्मि।"

मधुकरस्येमानि वचांसि निशम्य, पुस्तकहस्तं तं पुनः पुनरवलोक्य, बहुधा विचिन्त्य, जडीभूतो गोपालः स्वयमपि ज्ञातुं नाशक्नोत् स किं

ध्यायतीति । अयं मधुकर इदानीं स एव नास्ति यस्तु गोपालस्य पांशुक्रीडापेशलः सखाऽऽसीत् । स नगरस्य विद्यालये पठति । मधुकरस्य नवीनां स्वस्य च दीनां दशामालोच्य स विवर्णमुखः सञ्जातः । कीदृशं नगरं, कीदृशो विद्यालयो भवतीति प्रष्टुमना अपि प्रष्टुं न शशाक। केवलं तस्य हस्तात् पुस्तकमादाय तदुद्घाट्य पृष्ठेषु लिखितान्यक्षराणि दृष्टिगतानि कृत्वा, विविधवर्णानि रुचिररुचिराणि चित्राणि समवेक्ष्य विस्फारितनेत्राभ्यां, मौनमेव तस्य करे पुनरर्पयामास । तस्मिन् काले मधुकरस्तस्मै स्वर्गादागतो देवपुत्र इव, मातामहीकथासु कृतपदो राजकुमार इव, प्राप्तसारस्वतप्रसाद इव, विद्यायाः कोऽपि नूतनावतार इव, वनदेवताप्रसन्नामोदभरपुष्पस्तबकोपहार इव प्रतिभाति स्म । अपराह्णप्रचारप्रचलितो मधुकरः स्मयमानो बालसखं गोपालमापृच्छ्य ग्रामं प्रतिनिवृत्तः । गोपालस्तु प्रतिदिनं गोचारणाय ग्रामाद् बहिर्वनखण्डेषु निर्गतो गामनुगच्छन् दिवसं व्यतीत्य सायङ्काले गृहमायाति । अद्यास्मिन्नेव क्रमे तत्र मधुकरो बहुकालानन्तरं मिलितः । गतेऽपि मधुकरे, तस्य मनो मधुकर इव तमेव द्रुतं व्यावृत्यानुधावति स्म । "अहमपि पठामी'ति तस्य मनसि वारं-वारं समुदेति । अतः परं मनागपि मनो गोचारणे न रमते स्म । तस्य समक्षं मधुकरः, पुस्तकं, नगरं, विद्यालयश्चलचित्रमिव मुहुर्मुहुः परिभ्रमति । तस्य मनस्येवमायातं यत्सहसा प्रोड्डीय स नगरंगतस्तत्र विद्यालये कक्षायां छात्रैस्सह पठति ।

अथास्तङ्गते भगवति सवितरि दिवसावसाने गोब्रजरजःसङ्घातसमाच्छादिते पथि, वत्साकुलगोग्रीवावलनक्वणितघण्टिकारवपूरितासु दिक्षु, चञ्च्वानीताहारादानोत्सुकशावकरवसङ्कुलनीडे खगकुले, नभोविकीर्णभानुरश्मिस्पर्शकनकाभे तुङ्गतरुशिखरे, महानसनिर्गतधूमवलयवेष्टिते ग्रामे, दक्षिणकरविधृतापरकोटिनिबद्धरिक्तपाथेयपात्रपोट्टलिकां यष्टिं स्कन्धमारोप्यापरेण करेण गोपुच्छरोमगुच्छं परामृशन् गोपालः शनैश्शनैः निजगृहमाजगाम । गाञ्च काष्ठस्थूणबद्धां विधाय द्वारे मौनमुपाविशत् । गोरम्भारवमाकर्ण्य यावन्माता गृहान्निर्गत्यागच्छति तावद् गोपालं शून्यमिव, श्रान्तमिव, क्लान्तमिव, खेदालसमिव, व्यथितमिव, परिमुषितमिव,

ग्रहगृहीतमिवालक्ष्य शङ्काभरितहृदया सानुशयं तमुपसृत्य क्रोडे कृत्वा शीर्णमलिनशाटीपटान्तेन तस्य मुखं प्रमृज्य नैकवारं चुचुम्ब पप्रच्छ च खेदस्य कारणम् – "केयं वार्ता ? अद्य किमभून्मम जातस्य ? पुरा वनादागम्य मृगशावक इवोत्प्लुत्य गृहं प्रविश्य मामनुसन्धाय क्रोडे न्यपतः किन्तु कथमद्य तूष्णीकः स्थाणुरिवात्र द्वारे तिष्ठसि ? आवेदय मे सर्वं, व्यपनयामि ते मनस्तापमन्यद्वा विषादमूलम् ।कुतस्ते कश्मलमिदमागतम् ?" मात्रा बहुधा पृष्टः सोऽब्रवीत् – "मम बालसखो मधुकरो नगरे विद्यालये पठति । मयाऽद्य तस्य करे सुन्दरं पुस्तकमवलोकितम् । अम्ब, अहमपि पठिष्यामि गोचारणं न करिष्यामि । विद्यालये पठित्वा महाजनो भविष्यामि ।"

बालकमुखादेतच्छ्रुत्वा सा किमपि बोद्धुं न शशाक । पुस्तकं, विद्यालयः नगरं, पठनमिति शब्दास्तयाऽश्रुतपूर्वा एवासन् । पठित्वा कथमयं महाजनो भविष्यतीत्यपि तस्याः बुद्धेरविषय आसीत् । "मधुकरः पठती"ति श्रुत्वा, स गोपालात् किमप्यन्यद्विशिष्टं करोतीति केवलं तयाऽनुमितम् । अतो गोपालः किं कथयतीति ज्ञातुं तेन सह सा मधुकरस्य गृहमगात् । तत्र गत्वा मधुकरस्य पुस्तकानि दर्शं-दर्शं, तेन पठनविषये कथितं श्रावं-श्रावं, ज्ञानविकासप्रकाशविरहितग्रामनिवासिनी तपस्विनी सा केवलमिदमधिगतवती यन्यमधुकरस्तत्किमपि विशिष्टमाचरति यदन्येन केनापि पूर्वेण ग्रामवासिना नानुष्ठितम् ।

गृहं प्रतिनिवृत्य सा चिन्तामग्ना सञ्जाता – "कुलक्रमागते जीर्णभवने सवत्सा गौः सपुत्रा सेति चत्वारः प्राणिनः परस्पराश्रिता निवसन्ति । अहं ह्यन्येषां गृहेषु पेषणकुट्टनादिकं कर्म करोमि । गवाऽनया प्रदत्तं दुग्धं न केवलमावयोराहारकर्मणे प्रभवत्यपित्वस्य विक्रयार्जितधनेनान्यादीनि गृहोपकरणान्युपलभ्यन्ते । एवं हि यथाकथञ्चिज्जीवनं यापयामि । गोपालस्याग्रहं स्वीकरोमि चेत् कथमिमं पठनाय नगरं प्रेषयामि ? तदर्थं धनसङ्ग्रहस्य कोऽस्त्युपायः ? गोपाल एवास्मिन् जगति मम वार्धक्यस्यानन्य आधारः । अयन्तु मम हृत्खण्डमेव । तद्वियोगविक्लवा कथमहं प्राणान् धारयिष्यामि ? यदि गोपालस्य पितेदानीं जीवितोऽभविष्यत,

सोऽवश्यमेव मे पुत्रस्य मनोरथान् पूरयिष्यत् ।'' एवं दारुणदैन्यदारितमानसाऽसहायाऽसह्यवैधव्यवैक्लवनिष्ठुरजीवनं कथंकथमपि स्वपुत्रायैव धारयन्ती, किं करोतु, कं शरणमुपगच्छत्विति शोकाकुला किमपि निश्चेतुं न शशाक । केवलं निष्ठुरनियत्यै, दुर्दैवाय, विकलभाग्यायासहायपुरुषार्थायोपालम्भमुपाहरन्ती शून्यहृदयेव, विषमूर्च्छितेव, दुर्ग्रहगृहीतेव, नैराश्यबन्धग्रथितेव किप्यन्तर्ध्यायन्ती मुक्ताफललोचनजललवाऽऽत्मानमपि विस्मृत्य द्वारदेहल्यै सान्ध्यज्योतिरदत्त्वा तावच्चिरं स्थितवती यावद्गोपालः कुतोऽप्यागत्य तां तथावस्थितां साश्रुनयनां वीक्ष्य प्रबोधितवान् – ''मातः! किमिदम् ? मन्ये, ममाभिलषितं पूरयितुमक्षमा त्वमनुतप्यसे । अलं शोकेन । किमहं केवलं तव दुःखायैव जातोऽस्मि ? अतः परं नाहं पठनाय निर्बन्धं करिष्यामि । अम्ब! प्रसीद, विगतदुःखानुशया भव । तदुत्तिष्ठ, पश्य, समतिक्रामति गोदोहनवेले'' त्युक्त्वा स्वजीर्णकञ्चुकाधोभागेन तस्याः नेत्रे प्रमृज्य, दक्षिणं करं विधृत्य तामुत्थापितवान् । साऽपि दीर्घं निःश्वस्य गृहाभ्यन्तर्गता दीपं प्रज्ज्वाल्य दोहनपात्रमादाय गोस्थानं गतवती । ततश्च कृताहारो गोपालस्तु शय्यां गत एव प्रसुप्तः किन्तु सा वराकी रणरणिकोपनीयमानप्रजागरा तां निशामनैषीत् ।

अन्येद्युरुदिते त्रिलोकनयने भगवति भास्करे विहितप्रातरुचिताचारो मातृप्रदत्तं स्नेहस्निग्धं पयोबहुलमशनमुपभुज्य मध्याह्नभोजनपोट्टलिकामादाय नित्यवद् गामनुवर्तमानो वनं जगाम गोपालः । गौरियं प्रतिदिनं स्वैरं चरति, स मनागपि तां न बाधते, तत्र-तत्र तामनुसरत्येव । अद्यैषा सौरभेयी केनाप्यदृष्टेन निर्दिष्टेव तं कान्तारप्रान्तं नागच्छद्यत्र दिनानुदिनं गच्छति । अगमच्च तां दिशं यत्र प्रतनुस्रोतोवहा प्रवहति । तस्याः विकटतटमनुसरन्ती सा ग्रामादतिदूरं वनखण्डं समासादितवती यत्र गोपालः कदापि नागतः । तत्र समक्षमापतितं सुविततश्वेतदूर्वावनमवलोक्य सहसैव तस्य मुखाद्विनिःसृतम् – ''अहो! महदाश्चर्यं, कोऽप्यपूर्वो दूर्वावनाभिख्या नयनगोचरीकृता । मदीया धवलधवला सौरभेयी श्वेतदूर्वावने कीदृशी विराजते! अत्र वनदेवतायाः कोऽप्यभिनवः शृङ्गारः समुन्मिषति! मन्ये, कैलासादवतीर्य शिवस्याट्टहासराशिः वनश्रिय आतिथ्यमङ्गीकृत्य शयितो विभाति ।

अपि च, विश्वस्यापि प्राणिनो निखिलपुण्यफलमत्रागत्य श्वेतदूर्वासुकुमारवपुर्विलसति। ऐरावतस्य देहच्छायाविच्छित्तिरत्र वनलक्ष्मीप्रसाधनाय समागता, महापुरुषाणां यशांस्येव शाद्वलीभूतानि भावयन्ति जनमनांसि। अतिरमणीयमविस्मरणीयमेतद् दूर्वावनं धवलिम्ना मण्डितमखण्डितसौन्दर्यसारसरसम्। एतादृशं निसर्गसुन्दरं विधिकलितं ललितं श्वेतदूर्वावनं विभाव्य प्रीतिविस्तारितनेत्रस्य तस्याधरः स्फुरितः – "लब्धं नयननिर्वाणमिति।"

अथ किञ्चित्क्षणानन्तरमाकूणिताक्षः श्वेतदूर्वाश्रियः सौन्दर्यसुधां निपीय यावन्नेत्रे समुन्मीलयति तावद्वनस्यापरप्रान्ते प्रायेण नववर्षदेशीयं बटुं साक्षात्करोति। विस्मयाविष्टः कुतूहलाकृष्टः स गोपालस्तु निश्शब्द एव तस्य दृष्टिपथमपवार्य त्वरया गत्या तदन्तिकं गत्वा नातिदूरे पृष्ठपार्श्वेऽवस्थितिमकरोत्। तस्य देवपुत्रसन्निभं कान्तं सुरूपं दूर्वाकाण्डस्निग्धं तिलकितभालं वपुरभिनवं च वयः समीक्ष्य गोपालो मनस्यकरोत् – "यद्ययं सहसा दृष्टिपथान्न तिरोधत्ते, गगनतलं वा नोत्पतति, मां दृष्ट्वा च न बिभेति, तदाऽहं 'कस्त्वं, कुत आयासि, क्व यासि, किमिदं करोषी'त्येतत्सर्वं पृच्छामि। सोऽपि माणवको वर्धितप्रश्वासोऽनाश्वस्त इव तथापि तन्मयीभावेन श्वेतदूर्वादलान्युच्चिनोति स्म। दूर्वादलानि यथेच्छं सङ्गृह्य कञ्चुककोशे निधाय पुस्तकपुटकं वामकरे विधाय यदा स ततो वेगेन गमनोत्सुको बभूव तदैव गोपालस्त्वरया साम्मुख्यमभजत्। विस्फारितनेत्राभ्यां परस्परं वीक्षमाणौ तौ कियन्मात्रं स्थित्वा सहैवोचतुः – "कस्त्वं भोः, कथमिहागतोऽसि ?" प्रथमं गोपालः प्रत्यवादीत् – "नाम्ना गोपालोऽहं समीपवर्तिग्रामे पर्वतपुरे वसामि। प्रतिदिनं गोचारणायास्मिन् वन आगच्छामि किन्त्वद्यात्र श्वेतदूर्वाच्छादिते वनखण्डे मे प्रथमागमनम्। अधुना त्वद्दर्शनेन कृतार्थीभूताभ्यां नेत्राभ्यां स्पृहयति मे श्रोत्रवृत्तिः।" तेनाऽपि बटुनोक्तम् – "विद्याधर इत्यक्षराणि ममाभिख्यां भजन्ते। इतः प्राच्यां दिशि गव्यूतिमात्रं मे ग्रामो वर्तते। तत्रैव स्वपितृभ्यां सह यथासुखं निवसामि। अहं पठामि। मम ग्रामाद् होराद्वयकालाध्वनि स्थिते विद्यापुरे ग्रामे वर्तत एका पाठशाला। प्रतिदिनं

तत्रैव गत्वा शालासमयानुसारेण पठित्वा पुनः सायङ्काले गृहमागच्छामि। मध्याह्न-भोजनाय माता मह्यं सक्तुकपुटिकां ददाति।" "किमर्थं श्वेतदूर्वादलान्युच्चिनोषी"ति जिज्ञासमाने गोपाले, सोऽब्रवीत् – "विलम्बापराधदण्डं ददाति तत्रैकः शिक्षकः कोपकुटिलक्रूरकरेण निश्चर्मचर्पटचर्पटिकया छात्रेभ्यः। ममापि मार्गलङ्घने कदाचिद् विलम्बः स्यादिति त्राणोपायमाविष्कुर्वता मया श्रुतं दूर्वादलमाङ्गल्यम्। एकदा ग्रामपुरोहितपुत्रो मामवोचत् – "दूर्वा द्विधा भवति श्वेता श्यामा च। तत्र श्यामदूर्वा बाहुल्येन श्वेतदूर्वा कृच्छ्रेण लभ्यते। द्वे अपि माङ्गलिके भवतः किन्तु श्वेतदूर्वा न केवलमाध्यात्मिकं मङ्गलं विदधात्यपितु भौतिकं सङ्कटमपि निवारयति। श्वेतदूर्वा महतो भयात्त्रायते। श्वेतदूर्वाद्वितीयः नापराधदण्डभाग्भवति। अतः प्रयत्नेनाविष्कृत्य श्वेतदूर्वा सदैव धार्या।" तस्य श्रद्धेयं वचो निशम्य तस्मादेव दिनाच्छालामार्गादवक्रम्येतस्ततः श्वेतदूर्वान्वेषणपरोऽभवम्। किं कथयामि? एकदाऽस्मिन्नेव क्रमे मयेदं श्वेतदूर्वावनं दृष्टम्। काकिणीमिच्छता याचकेन यथाऽनायासं स्वर्णराशिरवाप्तः स्यात्तथैव मह्यं भाग्यदेवतया श्वेतदूर्वावनं प्रदत्तम्। तत आरभ्य विद्यालयगमनकाले प्रतिदिनमस्माद्वनात् श्वेतदूर्वादलानि साञ्चिनोमि।"

एतदनन्तरं गमनोत्सुकः स माणवको गोपालेन प्रार्थितः – "सखे, अहमपि पठितुमिच्छामि। अपि त्वं मां शालां नेष्यसि?"

"भवतु, गुरुजनं पृष्ट्वा प्रत्यागतः सायङ्कालेऽत्रैव त्वां सूचयिष्यमी"त्युक्त्वा गतः।

सायङ्काले विद्याधरमुखाद्यथाभिलषितं श्रुत्वा यदा गृहं समागतस्तदा हर्षोत्फुल्ललोचनं तस्य वदनं वीक्ष्य जननी मनस्यकरोत् – अद्य गोपालः कियत्प्रफुल्लो दृश्यते! नूनमेवानेन किमप्यपूर्वं वस्तु प्राप्तम्। प्रकटतया चोवाच – "अद्यापूर्वेव प्रसादश्रीः प्रासादयति तवाननम्। अपनय मे कुतूहलमावेदय हर्षहेतुकम्।" सरभसं तेन मातृक्रोडमाश्लिष्य निगदितम् – "अम्ब, दैवादद्य मयाऽदृष्टपूर्वमेकं श्वेतदूर्वावनं दृष्टम्। तत्रैवैको बटुः दूर्वादलोच्चयातुरो

वीक्षितः। तेन सह मम मैत्री सञ्जाता। स वनादुत्तरदिशि दूरवर्तिनि विद्यालये पठति। मया प्रार्थितेन तेन गुरुजनः पृष्टः। ते मां पाठयिष्यन्ति। श्वोऽहमपि विद्याधरेण सार्धं विद्यालयं गमिष्यामि। तत्र पठित्वा तव सर्वं दुःखं व्यपनेष्यामि।" माता तु तं कण्ठेनाश्लिष्य मौनस्वीकृतिनिःश्वासं विससर्ज।

द्वन्द्वदोलायमानयोर्द्वयोः शर्वरी कथमविदितगतिका व्यरंसीदिति साश्चर्य-मुत्थाय कृकवाकुवाचि प्रत्यूषे, करणीयं सर्वं समाप्य तौ मङ्गलैकभूतां सवत्सां गामग्रेकृत्वा श्वेतदूर्वावनं जग्मतुः। यथा प्रतिज्ञातं कालमनतिक्रम्य समागतं विद्याधरं दृष्ट्वा जननी तस्य हस्ते न्यासमिव गोपालमर्पितवती। जननीं गाञ्चाभिवन्द्य माङ्गलिकीं श्वेतदूर्वां समादाय विद्यालयगन्तुकामो गोपालो विद्याधरेण सह प्राचलत्। स्वस्तिमुद्रायां दक्षिणकरं समुत्थाय जननी तस्यां दिशि तावत्प्रेक्षमाणा तस्थौ यावत्तौ दूराद्दूरं गत्वा दृष्टिपथान्न विलुप्तौ।

त्वरितपदयोस्तयोः मार्गालापविषयो विद्यालय एवासीत्। तत्र गत्वा विद्याधरो गोपालं प्रधानाचार्यस्यान्तिकं संस्थाप्य स्वकक्षायां गतवान्। प्रधाना-चार्यस्तु गोपालात्सर्वं ज्ञेयं विज्ञाय, तस्य पठनाभिरुचिं परीक्ष्य, समुचितं शुल्कमादाय, पञ्जिकायां प्रविष्टिं विधाय तं विद्यालये प्रथमकक्षायां प्रवेशया-मास।

गच्छति काले गोपालो विद्यालयाद्विद्यालयं ग्रामान्नगरं क्रममाणः सावधानं व्यवधानहीनमध्ययनसोपानमारुरोह। स्वीयेनाध्यवसायेन, प्रतिभयोत्तमोत्तम-परीक्षासाफल्येन, सौहार्देन, श्रद्धातिशयेन, गुरुभक्त्या च स सर्वेषां मित्राणां गुरु-जनानाञ्च स्नेहभाजनमभूत। सर्वासु कक्षासु स आदर्शच्छात्र आसीत्। माध्यमिक-कक्षासु स कक्षाप्रतिनिधिः भवति स्म। स सदैव सर्वोच्चैरङ्कैः परीक्षां समुत्तीर्य छात्रवृत्तिं लभते स्म। यद्यपि दुस्त्यजां जननीं जन्मभूमिं विहाय स ग्रामान्न-गरमागतवान् तथापि ते स्मृतिपथे आगत्य तं साश्रुनयनं कुरुत एव। संस्कारा ह्याचाररूपेणावतरन्ति। मृद्भाण्डलाञ्छनमिव संस्कारोऽप्यमार्ष्टव्यो भवति। एवमेव ग्रामान्नगरविद्यालयमागत्यापि गोपालेन श्वेतदूर्वा न विस्मृता।

एकस्मिन्नुद्यानेऽल्पीयसैव कालेन तेन श्वेतादूर्वाऽधिगता। यद्यपि विद्यालयं प्रस्थितस्तस्य पन्था वक्रो भवति तथापि तत्र गत्वा श्वेतदूर्वादलान्याहृत्यैव गच्छति स्म।

अथैकदा विद्यालयं गन्तुं निवासान्निर्गत्य यावत्स वीथ्यामवतरति तावत्सौभिकेन प्रदर्श्यमाणं नकुलसर्पदंशनखेलनं वीक्ष्य, 'किं नगरेऽपि ग्रामवदेव भवती'ति जिज्ञासया तत्रैवावरुद्धगतिकोऽभवत्। यदा सौभिकप्रदर्शनमवसितं तदा सुप्तोत्थित इव भग्नतन्मनस्को गोपालो धावं-धावमुद्यानं गत्वा मुष्टौ श्वेतदूर्वादलकतिपयमादाय कृच्छ्रश्वासो विद्यालये प्रविश्य यावत्कक्षामनुसरति तावत्क्रुद्धस्य कक्षाध्यापकस्य हुङ्कृतिः कर्णे निपतिता– "अपि सुप्त आसीः? शिरस्यागते रवौ विद्यालयमागच्छसि? यदि कक्षाप्रतिनिधिरेवैतादृशमाचरति तदाऽन्येषां छात्राणान्तु गतिश्चिन्तनीयैव। किन्तु दण्डदेवस्य स्वभावो हि दुरतिक्रमः। सः सर्वं सममेव पश्यती"ति निगद्य तैलचिक्कणं वेतरादण्डमादाय ससम्भ्रमोपगतस्य, स्रस्तस्कन्धग्रन्थप्रसेवस्य भयावेगवेपमानस्य प्रणतमुद्रस्य गोपालस्य प्रथमं पृष्ठं ततश्च करतलं प्रहर्तुमारेभे। सव्ये करतले दण्डप्रहारं विसह्यापरं करं प्रसार्य यावन्मुष्टिमपावृणोति तावच्छ्वेतदूर्वादलानि भूमौ पतितानि। तानि दृष्ट्वा कक्षाध्यापकस्तु– "अहो, विलम्बापराधदण्डवञ्चनाय श्वेतदूर्वोपादानमि"तीषद्विहस्यापरञ्च दण्डद्वयं तस्मै समुपाहरत्। दण्डाघातं निःशब्दोऽश्रुजलैस्सङ्गतं कृत्वा कातरदृष्ट्या भूपतितानि श्वेतदूर्वादलानि वीक्षमाणः व्रीडयाऽधोमुखः कक्षायां प्रविश्य स्वस्थानगतोऽभूत्। यं विश्वासमवलम्ब्य श्वेतदूर्वा श्रद्धेयाऽभूदद्य तत्सर्वं क्षणमात्रेणैवापास्तम्।

अथ क्रमेण वर्षाद् वर्षमिति व्यतिक्रान्ते काले गोपालः परास्नातककक्षांमुत्तीर्य शिक्षाविभागे जनपदविद्यालयनिरीक्षकपदे नियुक्तो जातः। शनैश्शनैः समस्ते जनपदे कर्मठानुशासनप्रिययोग्यतमाधिकारिरूपेण तस्य महती ख्यातिर्वभूव। तस्य नाम्नैव सर्वेऽधीनस्था अधिकारिणः कर्मचारिणः शिक्षकाश्च भयकम्पिता जायन्ते स्म। न्यायवर्तिनस्तस्य सच्चरित्रस्य सुचरितैः स्वर्णपुष्पे सुगन्ध आविशत्।

समयपालनप्रतिबद्धः सः कर्तव्योपेक्षां न सहते स्म। कार्यालयानां विद्यालयानां वा निरीक्षणाय स कदा कुत्र समापतिष्यतीति भीताः सर्वेऽपि समयपालकाः कर्तव्यनिष्ठा अभवन्। यथा राजा तथा प्रजेति वरिष्ठाश्चेत्कर्तव्यनिष्ठाः भवेयुः कनिष्ठास्तु साधव एव।

एकदा कदाचित्स कस्मिंश्चिल्लघुनगरे स्थितस्य माध्यमिकविद्यालयस्याकस्मिकनिरीक्षणाय विद्यालयारम्भे प्रार्थनावेलायां तत्रोपस्थितो बभूव। प्रधानाचार्यं विहायान्ये सर्वेऽध्यापकाः समुपस्थिता आसन्। वरिष्ठाध्यापकपुरस्सरं स निरीक्षणविधिं समनुष्ठितवान्। प्रायेणार्धहोराविलम्बेनागतः प्रधानाचार्यो जनपदविद्यालयनिरीक्षकं वीक्ष्य स्तब्धो जातः। वार्धक्ये वयसि, समागते सति सेवानिवृत्तिकाले विलम्बागमनकर्तव्योपेक्षाकलङ्कितमध्यापनजीवनमनुचिन्त्य शोकशिथिलितकायः प्राचार्यकक्षे प्रविश्योपस्थितिपञ्जिकामवलोकयामास। तत्र स्वनामसम्मुखाङ्कितं प्रकोष्ठनिविष्टं रक्तचिह्नं प्रेक्ष्याधिकतरं विषण्णो बभूव। यस्यां कक्षायां निरीक्षक आसीत्तत्र गत्वा तमनुससार। कालात्ययेन, देहविकासेन, वेषादिभिन्नत्वेन प्रधानाचार्यः स्वीयं पुराछात्रं गोपालमभिज्ञातुं न शशाक। गोपालस्तु प्रथम दर्शन एवैनं परिज्ञातवान् यत्सोऽयं मे श्रद्धेयो गुरुवर्यो य एकदा विलम्बापराधिनं मां दण्डेन प्राबोधयत्। सम्भावयामि, स एव प्रोन्नतोऽत्र प्राचार्यपदं धत्ते। भवत्वस्मिन् काले संगुप्तिरेव वरमिति मनसि कृत्वा निरीक्षणनिवृत्तः प्राचार्यकक्ष उपविष्टोऽलीककोपं प्रदर्शयन् तमाह – "महोदय, प्रधानाचार्यो भवानेव विलम्बेनागमिष्यति चेत् शिक्षकाणां छात्राणान्तु कथैव का ? अपि भवान् प्रतिदिनमेवमेवागच्छति ? जानाति, मयाऽस्यापराधस्य को दण्डो विधीयते ? तात्कालिकप्रभावेण निलम्बनम्।"

"नहि, नहि; अपराधमिमं क्षन्तुमर्हन्ति भवन्तो ममैकं प्रथमञ्च" – सानुनयं सबाष्पकण्ठेन निवेद्य कातरदृष्टिप्रसरं निरीक्षकमुखादवतार्य नताननोऽभूत् प्राचार्यः। गुरुं प्रति स्वीयाचरणाय मनसि सलज्जोऽपि प्रकटतया गोपालोऽपृच्छत् – "आख्यापयत्वत्र को विलम्बहेतुः ?" प्राचार्यस्त्वेकः

सहाध्यापको निरीक्षकप्रसादनमुद्रां विधाय कृताञ्जलिरभाषत्– "मान्यवर, अयमस्माकं प्राचार्यस्तु समयपालनेऽनुशासनेऽध्यापने च जनपदे प्राथम्यं भजते। अस्येयं ख्यातिस्सर्वत्र प्रथिता विराजते। न केवलं शिक्षाजगति, जनतायां चास्य महती प्रतिष्ठा वर्तते। जना एनं न केवलमध्यापकमपि तु समाजसुधारकमादर्शनेतृगुणाढ्यं जननायकमपि मन्यन्ते। स्वीयं दुःखमविगणय्याप्ययं जनसेवां विदधाति। अद्यानेन यद्विलम्बो भूतः, तस्य हेतुमपि निवेदयामि। यदायं विद्यालयाय गृहान्निर्गतस्तदैवास्य प्रतिवेशी सहसाऽऽगत्य चरणयोर्पतितः। न जाने, कस्माद्दुर्दैवादकस्मात्तस्य पुत्रः सर्पेण दष्टः। श्रवणगतेनानेन दुर्वृत्तेनार्द्रः प्राचार्यमहोदयः सत्वरं गत्वा प्राथमिकोपचारं प्रयुज्य तं चिकित्सालयं नीत्वा तत्र व्यवस्थाप्य विद्यालयं प्रति प्रस्थितवान्। अतोऽयं विलम्बः।"

"अहो, समीचीनमाचरितं शोभनमि"ति साधुवादं विज्ञाप्य नेत्राभ्यामेवादण्ड्योऽयमिति संसूच्य सर्वानापृच्छ्य यथाभिलषितं जगाम निरीक्षकः।

अथ सप्ताहान्ते रविवासर एकाक्यैव गोपालः तल्लघुनगरं जगाम यत्र सः प्राचार्यो निवसति। तस्यावासमभिज्ञाय तमभिलक्ष्य फलमिष्ठान्नकरण्डकहस्तो यावद्गच्छति तावद्दूरादेव पश्यति श्रद्धेयमादर्शगुरुवर्यं यो ग्रीष्मतप्तमध्याह्ने गृहसमीपवर्तिनिम्बतरुच्छायायां चत्वरास्तीर्णे कटे समुपविश्य तालपत्रव्यजनं चालयन् कमपि ग्रन्थं पठति। कस्यचिदागमनाभासेन पदन्यासरवेण मुखमुन्नमय्य तेन यद्दृष्टं तदपूर्वमविश्वसनीयमासीत्। जनपदविद्यालयनिरीक्षकस्तस्य गृहमागत इति साक्षात्पश्यन्नपि दृष्टिर्नैव विश्वसिति। गोपालस्त्वेतदनुभूय क्षणं यावन्मौनमेव सस्मितस्तस्थौ। प्राचार्यस्तु वारम्वारमुपनेत्रं प्रमृज्य, निर्भरं निभाल्य, सर्वात्मना सोऽयमिति विनिश्चित्य यावदभ्यर्थनायै उत्थायाग्रेसरति तावदलमनेनायासेनेत्युक्त्वा गोपालस्तदन्तिकमुपसृत्य मुष्टिविधृतानि श्वेतदूर्वादलानि चरणयुगले निवेद्य गुरुपादपद्ममुपजग्राह। श्वेतदूर्वादलदर्शनमात्रेणातीतं चलचित्रमिवानुस्मृत्य स्फुरितविरोचिताभ्यां नयनाभ्यां स्थूलमुक्ताफलधवलाश्रुबिन्दून् विमुच्यान्तोहत्तन्त्रीनिनदेन स्वरेण– "अये, गोपाल त्वमि"ति सस्नेहं

सरभसं कण्ठेनाश्लिष्यामृतपूरप्लावितान्तःकरणः परां निर्वृतिं जगाम । प्राप्तापूर्वसुखौ परस्परमालिङ्गितौ तौ विद्याविनयाविव सुचिरं तस्थतुः ॥

**बाल्येऽनुभूतं सहजं विचित्रं, विजल्पितं चारुतरं प्रकामम् ।**
**सारस्वतं प्राप्य नवं प्रसादं, हृद्याऽनवद्या कलिता कथेयम् ॥ १ ।**

**अपूर्वा श्वेतदूर्वा हि प्रभुणाऽऽविष्कृता शुभा ।**
**करोतु सुधियां नित्यं मनःप्रीतिविवर्धनम् ॥ २ ॥**

# ॥ कायाकल्पः ॥

इह जगति दुस्सहदुःखनिपाता वज्रसारा अपूर्वा अननुमेया असमर्थिता अपि कथं जन्तून् स्वविषयतामुपनयन्तीति तदानीं तस्याः बुद्धिपथं नायाति स्म। हा दुर्दैवहतक! मया ते किमपकृतम् ? रे मनोरथाः! कथं जलबुद्बुदा इव क्षणेनैव विनष्टाः ? हा हृदयाभिलाष! पदमप्येकमगत्वा मार्गारम्भ एव केन निपातितोऽसि ? रे दुरात्मन् वात्सल्य! कस्य जन्मनो वैरनिष्कृतिं वाञ्छसि ? येन त्वयाऽहमेवं वञ्चिताऽस्मि। हा किं करोमि? कं शरणं गच्छामि? इदानीं को मे सहायः? इत्येवमनेकधा विलपन्ती शोककातरा साश्रुनयना निरालम्बा छिन्नमूला लतेव गृहान्तः कक्षकुट्टिमे निपपात। शोकशिथिलताङ्गी सा निमीलितनयना तथैव तस्थौ। तस्याश्चेतःपटले सर्वमपि पूर्वघटितं चलचित्रमिव पुनः पुनः प्रद्योतते स्म।

कुले जाता, सुसंस्कारपोषिता, महद्वात्सल्यवर्धिता, नवयौवने वयसि परिणीता सा सुरूपं सुशिक्षितं प्रेममयानुभावं लब्धपदप्रतिष्ठं पतिं समवाप्य, जगदीश्वरस्य वरदानमिव मन्यमाना महतामोदेन सर्वसख्यप्रसाधितेन दाम्पत्येनाविदितगतकालं जीवनं ससुखं नयति स्म। अयाचिता लक्ष्मीरिव कन्यकैका तस्याः क्रोडमलञ्चकार। साऽपीदानीमनुरूपेण वरेण सङ्गता सौभाग्यफलं लभते। सुजाता नाम्नीं तां तनयामनुजातः कुलप्ररोह इव सकलाशाश्रयो यस्याभिख्यायां सातिशयानन्दनन्दितेन तातेन 'सुजात' इत्यक्षराणि योजितानि, बालचन्द्र इव नित्यं वर्धमानः स सर्वेषामपि नयनासेचनको बभूव। गुरुभिराशंसितः सुहृद्भिस्सहपाठिभिः प्रशंसितः स यथा बाल्यात् कौमारं, कौमाराद्यौवनं तथैव प्राथमिकान्माध्यमिकं, माध्यमिकादुच्चशिक्षाक्रममारुरोह। सर्वमपि सानन्दं स्वर्गनिभमस्माकं कौटुम्बिकजीवनं शरज्ज्योत्स्नास्नातं सुपुष्पपल्लवयुतमुपवनमिव विराजते स्म किन्तु काप्यासीत्साऽशुभा निष्ठुरवेला यस्यां ममायं पुत्रो मित्रमण्डलीगतेन केनापि कपटमित्रेण गगनमध्यगतः पूर्णचन्द्र इव ग्रहमण्डलीगतेन

क्रूरग्रहेण राहुणा गृहीतः। तस्मादेव दिनात् स केनाप्यावेशचूर्णेन वशीकरणमन्त्रेण वा वशीकृत इवाध्ययनं विहाय, गुरुजनं तिरस्कृत्य, सन्मित्रमण्डलीं विमुच्य, परिवारजनमुपेक्ष्य, किं बहुना, आत्मानमपि विस्मृत्य केवलं तदेव कपटमित्रं सर्वातिशायिप्रियजनं मन्यमानः तेनास्वादितं मादकद्रव्यं मधुरविषमपि निश्शेषानन्ददं जीवनसर्वस्वं रसायनममृतकल्पमिवेति सेवितुमारेभे। कतिपयैरेवाहोभिः स दिनानुदिनप्रवृद्धलोभान्नष्टविवेको गहनमादकद्रव्यमोहतमसि निममज्ज।

अथ गतेषु केषुचिद्दिवसेषु, 'सुकठिनमादकद्रव्यपाशनिबद्धोऽयं जन' इति विभाव्य, नैकधा परीक्ष्य तत्कपटमित्रं तमुवाच – "सखे, इदानीमहं रिक्तहस्तोऽस्मि संवृत्तः। यावन्मे कञ्चुककोशेनानुमतस्तावत्ते सेवा कृता। त्वं तूच्चपदस्थाधिकारिणः पुत्रोऽसि। अतस्त्वयौषधाहरणाय धनमानेतव्यम्। पश्य, धनं विनेयं महार्घा महौषधिः, कथमिव प्राप्या ? उद्धारोऽपि कियत्कालावधिः ? कोऽप्युपायः करणीय एव। तव गृहे धनाभावो नास्ति। केवलं प्राप्तिविधिस्साध्यः" इति। यथा प्रमत्तस्य मदिरापानं तथैवायमुपदेशस्तस्य चेतः पुनरपि विकृतमकरोत्। दुर्निवारता खलु व्यसनोपनिपातानाम्। तिक्तालाबुका निम्बतरुं समाश्रिता। रात्र्यन्धो भूयोऽप्यन्धत्वं प्रापितः। दुस्साहसः किं किं न कारयति ? ततः प्रभृति तस्य धनविषयिणी जिघृक्षा हविषा कृष्णवर्त्मेव निरन्तरमधिकाधिकञ्च वर्धते स्म। आरम्भे तु पुस्तकक्रयाय, नैकशुल्कप्रदायाय, शैक्षिकयात्राकरणायेतरावश्यकतापूर्तये नित्याविष्कृतैर्नवनवैर्व्याजैः स मां धनं याचते स्म किन्तु कालान्तरे शङ्कितायां व्याजपद्धतौ स चौरकर्माश्रितवान्। प्रथमं द्रव्याणां ततश्च वस्तूनां लोपो गृहे समारब्धः। त्रयोऽत्र वयं चतुर्थश्च सेवकः। नान्यः कोऽपि पञ्चमः। तत्कथमिदं चौर्यम् ? लक्षितायां शङ्कायां चौर्यनैरन्तर्यं छित्वा कालव्यवधानेनावसरं प्रतीक्ष्य स द्रव्यापहारं करोति स्म। कदाचित् किंसखिभिस्सहान्यतोऽपि वस्तून्यपहृत्य विक्रीय च धनं लभते स्म।

अस्मिन्नेवान्तरे लक्षिता तस्यासहजा वृत्तिः शरीरदौर्बल्यञ्च। अनियतकालिकं गमनागमनं प्रति पृष्टे सति कथयति – "पठितुं मित्रस्य गृहं गच्छामी"ति।

भोजनाय तस्यारुचिमनुभूय जिज्ञासिते समाधान करोति – "अद्य मित्रस्य गृह एव भोजनं कृतमि"ति। कृशकायताविषयेशङ्किते स आवेदयति – "अध्ययन-श्रमवशादेव दौर्बल्यमि"ति। उद्घूर्णिते रक्तनयने निरीक्ष्य तर्किते सति निराकरोति – " रात्रौ पठनाय जागरणादेवैतादृशे नयने" इति। कदाचिद्दिवस-पर्यन्तमेव स्वपिति। कदाचित् प्रातरेव निर्गत्य निशीथे समायाति। यदि तस्य पिता एतत्सर्वं प्रष्टुमना अपि भवति तदाऽहमेव निवार्य समाधातुं प्रयत्नपरा भवामि। एकपुत्रतया दुर्ललितं तं परोक्षतः सुचरितायोपदिशामि।

अथैकदा सुजातस्य महाविद्यालयात्पञ्जीकृतं पत्रमेकं तस्य पितुर्नाम्ना प्राप्तम्। पत्रगतं 'कक्षासु समुचितोपस्थितेरभावात्परीक्षा-निषेधः सुजातस्ये'ति विषयमधिगम्य तस्य चेतसि समाक्रान्तः क्रोधो नेत्राभ्यां रक्तोपहारमिवादायो-पस्थितो वभूव। रोषावेशविवशस्य तस्य काये कम्पः पदमकरोत्। अपूर्वामलक्षितां तस्यैतां स्थितिमालोक्याऽऽशङ्क्य च भाविनं कमप्यनर्थं, तस्य चेतःप्रसादनाया-मर्षनिवारणाय मर्षणाय च बालकस्य दुर्वृत्तं यावदहं किञ्चन वक्तुमुपक्रमामि तावत्तरलिततर्जनीतर्जनेन वर्जनगर्जनेन मां प्रतिषिध्य रौद्रीं मुद्रां विधाय तस्थौ। मया मनस्येव भगवान् प्रार्थितः– "सुजातो नागच्छत्विदानीमि'ति।' कालेनास्य क्रोधः शममेष्यति। किन्तु स मन्दभाग्यः तस्मिन्नेव क्षणे दुश्चक्रवातेन शीर्ण-पत्रमिव दुर्दैवेन क्षिप्रमेव तत्रानीतः। घृताहुत्या हुतवहशिखा इव तस्य दर्शनमात्रेण क्रोधावेगः शतधा समुज्जृम्भितः। वज्रध्वानकठोरस्वरेण – "कुत आयासी"ति पृष्ट्वा, तस्य मौनमालक्ष्य, 'किमेतदिति' पत्रं समक्षमवक्षिप्य यष्टिमादाय प्रहर्तुमारब्धवान्। कियत्क्षणं त्ववशेव, जडीकृतेव, विमूढेव, निर्गतचेतनेव, विस्फारितनेत्राभ्यां पश्यन्त्यप्यन्धीकृतेव, प्रतीकर्तुमुद्यताऽपि नियन्त्रितेव रुद्धा सती, सहसा सुजातं बाहुभ्यामाकृष्य क्रोडेनाश्लिष्य समाच्छाद्य तावत्तस्थौ यावत्स प्रहारान्न विरराम। "प्राणानादायैव शान्तो भविष्यसी"त्युक्तायां मयि, सोऽपि नेत्राभ्यामग्निं वर्षयन्निव, उदासीनतया मन्दस्वरेणोवाच – "एतादृशात्पुत्रा-त्त्वनपत्यत्वमेव वरम्।" सुजातस्तु निश्शब्दः शून्यनेत्रश्शनकैरुत्थाय स्वकं कक्षं

जगाम द्वारञ्चान्तर्पिहितवान् । कयाचिदनिष्टाऽऽशङ्कया मे हृदयं चकम्प । तस्मिन् रात्रौ महानसे नाग्निः प्रज्वलितो नापि नेत्रे निद्रामुपगते ।

प्रातःकाले सेवकः ससम्भ्रममागत्य सूचितवान्– "गृहे नास्ति ।" मया सोद्वेगं पृष्टम्– "कः ?" तेनोक्तम्– "स एव ।" मयोक्तम्– "अपि सुजातः ?" प्रत्युत्तरे स मौन एव स्वीकृतिमुद्रायां शिरः कम्पितवान् । सपदि भर्तुरन्तिकं गत्वा सार्तनादं मया विलपितम्–"अपि शृणोषि ? सुजातो गृहे नास्ति ।" स तूपेक्षयाऽब्रीवत्– "किं तेन ? क्वचिद् गतो भविष्यति । गच्छ, गृहनियोगमशून्यं कुरु । वृथैव विलापं प्रलापं वा मा कुरु ।" हृदि वज्रशिलां निधाय परावर्त्य द्वारिदेशे दत्तदृष्टिः सुचिरं निर्वर्णयन्ती सुजातमनुचिन्तयन्ती तस्थौ ।

सोऽपि दिवसः तथैव व्यतीतः । रात्रिस्तु कालरात्रिरिवाजगाम । भर्ता मया बहुधा धिक्कृत्यापि सानुनयः प्रोक्तः – "कुपुत्रस्यापि पितरौ कुपितरौ न भवतः । तस्मिन् गतेऽहोरात्रपर्यन्तं क्षणमपि मयाऽनुद्वेगतया न नीतम् । न जाने कुत्र कस्यां दशायां वा भविष्यति मे पुत्रः ? कथं तव हृदयं पाषाणमयं जातम् ?" मय्येवं कथितायां तस्यान्तर्भूतघनप्रेम्णः सन्तापद्रवीभूतं निष्यन्दमिवादाय नयनकोणाभ्यां निर्गत्य कपोलस्खलितोऽश्रुप्रवाहः ससार । अहो ममत्वमित्यनुचिन्त्य तस्य नेत्रे शाटीपल्लवेन प्रमृज्य सुजातस्यान्वेषणाय निवेदितवती । सोऽपि दीर्घमुष्णञ्च निःश्वस्य, "भवतु, गच्छामी"त्युक्त्वा गृहान्निर्जगाम । तस्मिन् गते तस्यामेव दिशि सोत्सुकनयनाभ्यां विलोकयन्ती, दूरभाषयन्त्रे कर्णं कुर्वाणा तमपि दिवसमतिनीतवती । असह्या खल्वियं प्रतीक्षा । रात्रिरपि गतप्राया । तारका इवाशाऽपि म्लानतां याति । अन्वेषणपरो भर्ता नाद्याप्यागतो नापि कश्चित्सन्देशः प्रहितः । "मे भाग्यस्यायं दुर्विपाक" इति शोकोद्विग्नमानसा रणरणिकोपजायमानप्रजागरा तां निशां तथैव तिष्ठन्त्यनैषीत् ।

अपरेद्युरुदिते भगवति भास्करे गृहाद्बहिरागत्योपविश्य चालिन्दकुट्टिमे द्वारैकबद्धदृष्टिः सा यावत्पश्यति तावद् विडम्बितगतिकः पराजितो द्यूतकर इव,

हताश इव, परिमुषित इव, लुठित इव, भग्नमनोरथ इव, श्रीहत इव, जङ्गमः शुष्कतरुरिव, दावानलदग्ध इव, मूर्तिमान् दुर्भाग्य इव कथंकथमिव पदात् पदं प्रक्षिपन् भर्ता दृष्टिपथे निपतितः। तमेकाकिनमायान्तं विलोक्य विदीर्णहृदया सहसोत्थाय द्वारदेशमुपगम्य तस्य पादयोर्निपत्य सवाष्पगद्गदमुच्चैर्विललाप। भर्ता तु तां बहुधा समाश्वास्य गृहाभ्यन्तरं नीतवान्। नातिचिरमिव विश्रम्य सर्वमसाफल्यवृत्तान्तमाख्यातवान्।

अथ व्यतीते दिनद्वये, प्रातरेव दूरभाषघण्टिका निननाद। यावत्प्रापकमुत्थाप्यकर्णं प्रति नीयते तावदपरतः कोऽपि ब्रवीति – "श्रूयताम्। आरोग्यनिकेतनादहं डॉ० माथुरो ब्रवीमि। भवता वार्तापत्रेषु विलुप्त इति विज्ञप्तः सुजातो नाम युवकोऽत्र रात्रौ मार्गाहतः केनापि नीत्वाऽऽपात्कक्षे स्थापितः।" एतन्निशम्यानुपदमेव सभार्यः स आरोग्यनिकेतनं जगाम। तत्रापात्कक्षे संज्ञाशून्यमुपचर्यमाणं निजपुत्रं विलोक्य दम्पती शोकाकुलौ जातौ। चिकित्सकैस्समाश्वासितौ तौ तनयस्य सेवायां दत्तचित्तौ बभूवतुः। ईशानुकम्पया, चिकित्सकानां प्रयत्नैः, स्वजनानां गुरुजनानाञ्चाशिषैश्च सञ्जातसंज्ञः क्रमेणारोग्यमवाप्तवान्। गृहं समागत्य पश्चात्तापाश्रुभिः मनोमालिन्यं प्रक्षाल्य, पित्रोराशीर्वचोभिर्विगतकल्मषः स्वजनानां स्नेहं प्रेरणोत्साहञ्चाधिगम्य पुनरपि प्रसन्नात्मा भूत्वा महता मनोयोगेनाध्ययनं चकार। स्वयोग्यतया सुजातः सूच्चाधिकारिपदं लब्धवान्। मार्गच्युतानां लक्ष्यभ्रष्टानाञ्च युवां समुद्धारायापि सर्वथा प्रयतते। एवं हि सुजातः सुनागरिको जातः।

"कथं तव कायाकल्प" इति कदाचित् पृष्टे सति स विहस्य न्यवादीत् – "भो, आघात एव चेतयति। मयाऽपि सार्धमिदमेव घटितम्। यदा मे तातपादा भृशं ताडितवन्तः तदा रात्रौ निभृतं निर्गत्याहं तदेव मित्रं प्रति गतवान्। "पितृगृहं सर्वथा परित्यज्य त्वामेव शरणमागतोऽस्मीदानीं रिक्तहस्त" इति निवेद्य तूष्णीं तस्थौ। विदितवृत्तान्तः स मां रिक्तकोशं ज्ञात्वा भृशं चुकोप तिरस्कृत्य च बलादेव स्वगृहान्निस्सार्य द्वारकपाटं रुरोध। तदाहं स्वीयां दैन्यदुरवस्थामनुभूय जगदिदं सर्वं

शून्यमिव मन्यमानो विक्षिप्तः सन्नितस्ततो बभ्राम । रात्रौ राजमार्गे मोटरयानेनाहत इति तु स्मृतिपथमायाति । ततश्च लब्धसंज्ञः स्वकं चिकित्सालयविष्टरे समक्षं च पितरौ विलोकयामास । तस्मादेव क्षणाद् बुद्धिपूर्वकृतं पापं प्रणष्टं मे नवं जन्म चाभूदिति ॥

**अहो बत किमाश्चर्यं संसारे परिदृश्यते।**
**अकल्पितमपूर्वञ्च वृत्तं दैवेन नीयते॥१।**
**युवानः सत्कुले जाता आनन्दमृगतृष्णया।**
**मार्गभ्रष्टा हि जायन्ते गता दुःसाध्यसङ्गतिम्॥२।**
**कायाकल्पकथामेतां श्रद्धायुक्तः शृणोति यः।**
**न स कलिकृते पापे कृतबुद्धिर्निमज्जति॥३।**

# ॥ भाटकावासमार्गणम् ॥

महाभारते यक्ष-युधिष्ठिर-संवादे यक्षेण युधिष्ठिरं प्रति पृष्टे प्रश्न-चतुष्टये वर्तत एकः प्रश्नः 'कश्च मोदते' इति । तत्र धर्मात्मा युधिष्ठिर उत्तरं प्रस्तौति –

**"पञ्चमे वा षष्ठेऽहनि शाकं पचति वै गृहे ।**
**अनृणी चाप्रवासी च स वारिचर मोदते ॥"**

यदीदानीं युधिष्ठिरस्येदमुत्तरमधिकृत्य विचार्यते, भारतेऽन्येषु राष्ट्रेषु च मोदस्य कथैवास्तङ्गता स्यात् । सम्प्रति ऋणं प्रवासं च सर्व एव जनो वाञ्छति । 'ऋणं कृत्वा घृतं पिबेदिति' चार्वाकसंस्कृतिरुत्तरोत्तरं प्रसरितचरणा विस्तारं प्राप्नोति । अयं लोकः ऋणार्णपरम्परामाश्रित्यैव विकासलक्ष्यमधिरोहति । आगामिनि कालेऽधिकाधिकमृणं सामाजिकप्रतिष्ठाया वित्तसुरक्षायाश्चापि विषयो भविष्यतीति मोदस्याभावकल्पना न करणीया । नास्ति कश्चित्सन्देहः प्रवासिनो जना अपीदानीं मोदन्त एव । यद्यपि सर्वे स्वकीयावासं कर्तुं प्रयतन्ते किन्तु विडालस्येच्छामात्रेण न भवति विशाखिकाभङ्गः । अतो येषां स्वकीयावासो न भवति त एव प्रवासिनो जनाः खिद्यन्ते ।

महानगरेष्वावासानां महती समस्या वर्तते । सेवावृत्तिं स्वीकृत्य ये जनाः स्थानान्तरणप्रपञ्चैः पीडितास्त एवानुभवन्ति समस्यामिमाम् । मन्दभाग्योऽहमप्येतद्वर्गीयो जनः । स्वसंक्षिप्तेऽपि सेवाकाले तन्तुवायस्य मल्लिक इवाधिकारिवर्ग-सेवाकौशलविरहितोऽहं प्रायेण प्रतिवर्षमेवेतस्ततः नगरान्नगरं कार्यालयात्कार्यालयं दूराद्दूरतरं स्थानान्तरितो भवामि । पटहानां सभामध्ये मृदङ्गस्य अहो ध्वनिः ! इदानीं सुदूराद् दक्षिणभारतस्यैककोणात् कालीकटनगरात् स्थानान्तरितः

उत्तरभारतस्थिते कर्णपुरनगरे सम्प्राप्तोऽस्मि। अखिलभारतीयसेवायामधिकारिपदलब्धोऽपि विभागीयावाससुविधाविरहितोऽहम्। अतः स्थानान्तरणस्य कटुफलमावासस्यान्वेषणं तु सर्वप्रथममास्वादनीयं भवति।

कर्णपुरमागत्य स्वकीये कार्यालये कार्यभारं गृहीत्वा तत्रत्यैः सहकर्मिभिः प्रथमः संल्लापस्त्वावाससम्बन्धिनिवेदनमेवासीत्। सर्वेषां सहानुभूतिभाजनं भूत्वाऽप्यनुदिनमावासचिन्तया मदीया देहयष्टिः क्षीणमांसलतां प्रतिसरति। एतत्कृते वार्तापत्रेष्वपि मया विज्ञापनं मुद्रापितं किन्तु कुतोऽपि काचित् सूचना नागता। कियद्दिवसं कार्यालयस्यातिथिगृहेऽहमेकाकी निवसामीति पीडा सदैव मम चित्तं विकलयति स्म। महाकवेः कालिदासस्य यक्षस्तु स्वकर्तव्यनिष्ठाच्युतस्वामिनश्शापवशाद् वर्षपर्यन्तं प्रियतमाविरहदुःखं भुक्तवान् किन्तु मम कस्यापराधस्य फलमिदमुपनतम्? एते क्रूरहृदयाः प्राशासनिकाधिकारिणोऽणुमात्रमपि न चिन्तयन्तीमा बाधाः क्लेशमिदञ्च। मम परिवारस्तु भृशं दूरमितो वर्तते। तत्र गमनागमनमपि सुकरं नास्ति। कथं ते दिवसानतिवाहयन्ति? तेषामुपरि किमापतति? मया प्रेषितं पत्रं हस्तगतं भूतं न वा? ततोऽपि किमपि पत्रं नाधिगतम्। मातुः क्रोडे स्थितो मेऽल्पवयः पुत्रस्तस्याः खिन्नं मुखं निजाङ्गुलीभिरुनमय्य तामवश्यमेव प्रक्ष्यत्येवं मद्विषयकं प्रश्नम्। प्रतिवेशिनोऽप्यागत्य मद्विषयिणीं वार्तां पृष्ट्वा निरुत्तरां विरहकातरां मद्भार्यां समाश्वास्य गच्छन्त्येव। एतत्सर्वमनुशोचमाणस्य मम चेतः कार्यालयीयकार्येष्वपि न रमते। कतिपयैरेवोहोभिः मेयानुभूतमधुना महानगरेषु स्वमनोवाञ्छितावासप्राप्त्यपेक्षया चन्द्रतलावतरणं सुकरम्।

अथैवं व्यतिक्रामति काले एकदा मम सहकारिणा कथितम्– "मान्यवर, आवासप्राप्त्यर्थं तस्यान्वेषणाभियानस्यावश्यकता वर्तते। प्रातस्सायमथवा कार्यालयादवकाशं गृहीत्वाऽऽदिवसं यावदावासस्य व्यवस्था नं भवेत्तावदस्य महानगरस्य वसतीनामाहिण्डनं कर्त्तव्यमेवास्माभिः। अस्मिन् कर्मणि भवता सहाहमपि भ्रमणं करिष्यामि। अधुना समयश्रमद्रव्याणां मोहं त्यक्त्वा

केनाप्युपायेन कार्यमिदं साधयावः। यदि भविष्यत्यावश्यकता माध्यमकस्यापि सेवा ग्राह्या काम्यमालयं प्राप्तुम्। मुखान्मुखं कर्णात्कर्णमिति लोकपरम्परयेदं सुकरं भविष्यति। रिक्तभाटकावासानां सूचना तत्र तत्र स्थितेष्वापणेषु, वीथीसु, केशकर्तनालयेषु, चायगृहेषु प्राप्यते। ताम्बूलविक्रेतारोऽपि बहुधेदृशं वृत्तं सूचयन्ति। अतो विलम्बो न कार्यः। अद्यैव प्रस्थानं भवतु।''

शुभचिन्तकस्य मे सहकारिणश्चिन्तितोपायो मह्यमपि रोचते स्म। यतो हि हस्तस्योपरि हस्तं निक्षिप्यैवमेव स्थितेन कथमावासः प्राप्यते। न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः। अथ तत्क्षणादेवासमञ्जसं विहाय, उलूखलाय शिरोदाने मुसलानां भयं कथमिति विमृश्य श्रीगणेशपार्वतीपरमेश्वराणां स्तुतिं वारम्बारं विधाय तेन सुमनसा सहकारिणा सह पदातिनैवावासमार्गणाय कार्यालयान्निर्गतवान्। ततो नाधिकं दूरं गत्वैकं ताम्बूलापणं प्राप्य मम सहकारिणोक्तम् – ''भवतु, पृच्छामि तावदेनं ताम्बूलविक्रेतारम्।'' अथ तत्र गत्वा सः ताम्बूलचर्वणेच्छया तं विक्रेतारं ताम्बूलगुटिकारचनाय निर्दिश्य भाटकावासविषये पप्रच्छ। तेन समीपवर्तिन्यां वसतौ केचिद्रिक्तावासाः सङ्केतिताः। सङ्केतानुसारं तत्र गत्वाऽऽवां दृष्टवन्तौ द्वित्रा आवासाः किन्तु ते मह्यं न रोचन्ते स्म। अतस्ततोऽपसृत्यावां परिभ्रमन्तौ सुनियोजितायामेकस्यां नववसतौ गतवन्तौ। सुविहिते आयताकारे संस्कृते स्थले योजनाबद्धरूपेण निर्मितानि भवनानि नात्युच्चप्राकारवेष्टितानि प्रायेण समानाकारप्रकारवर्णानि प्राचीनाधुनिकवास्तुकलामिश्रितरूपाणि गृहवाटिकातिलकितानि श्रीशोभासम्पन्नानि तत्र विराजन्ते। वसतिमध्ये हरितं प्रफुल्लमुद्यानं क्रीडासङ्कुलञ्चावलोक्य मनस्याह्लादो जातः। उद्यानं परितः स्वच्छां श्यामवीथीं, तदेकतो हर्म्याणां सुरुचिरा मनोहारिण्यः पङ्क्तीर्विभाव्य, चतुःषु कोणेषु शिशुविद्यालयं प्राथमिकस्वास्थ्यकेन्द्रं, कोषागारं पत्रालयञ्च वीक्ष्य सर्वसुविधासम्पन्नायामस्यां वसतावावासमाप्तुमभिलषति स्म मदीयं मानसम्। किन्तु तत्र पृष्टे सति ज्ञातं यदत्र सर्वाण्यपि स्वकीयावासप्रयोजनानि भवनानि न दीयन्तेऽन्येषामावासाय भाटकमूल्यैः। एतद्वृत्ततुषारेण

मदीयाशाकलिका विकासात्पूर्वमेव हता । क्लान्तमनोभ्यां श्रान्तशरीराभ्यां कथमपि पदात्पदमुद्वहन्तावावां श्रमापनयनायैकस्मिन् चायगृहे प्रविष्टवन्तौ । खेदालसं शरीरभारं काष्ठासने निक्षिप्य मम सहकारिजनो भृत्यमेकमाहूय सोच्छ्वसितेन स्वरेण मधुरं कवोष्णं चायपेयमानेतुं समादिदेश । ततश्च खेदशिथिलितहस्तेन चषकमुत्थाप्याधरं प्रति नीयमानो हताशभावभरिते मम नेत्रे सदयं ददर्श। शनैश्शनैश्चषकं रिक्तं विधायाथेदानीं किं करणीयमिति प्रश्नाशया परस्परं विलोकयतोरावयोः मनस्स्थितिमालक्ष्य तत्रस्थैको जनः शनकैरुत्थाय मत्समीपमागत्य क्षमायाचनापूर्वकं पप्रच्छ – "यदि नास्ति गोप्यमतिखेदकरं वा भवतोः व्याकुलता-कारणं ज्ञातुमिच्छामि । स्यान्मदीयापि काचित्साहाय्यशक्तिः" । ततो मयानुमतः स सहायकस्तं सर्वमावेदितवान् । एतद् विज्ञाय सस्मितं स प्रोवाच – "न क्षुद्रवात्याभिहतः कम्पति गिरिः । कथमेकेनैव श्रान्तदिवसेन भवन्तौ नैराश्यं भजेते ? भाटकावासमार्गणप्रपञ्चानुयुक्तं सुखशान्तिरहितं जनमपहाय बुभुक्षा पिपासा निद्रापि दूरमपयान्ति । मृगमरीचिकावद् गृहप्राप्त्याशा तं जनं दूराद्दूरं नयति। आगृहप्राप्तेः तस्मै न किमपि रोचते । स तमेवालपति, तमेव श्रृणोति, तमेव बहु मानयति यस्तं कञ्चिद्रिक्तावासं सूचयति । यावद् स गृहं नाप्नोति तावत्तस्योच्छ्वासाः सखायः चिन्तैव सङ्गिनी । अनुभवामि भवतोः क्लेशम् । यथार्थञ्च प्रोक्तं वृद्धैः –

**"सुकरं क्षितिजं प्राप्तुं सुकरं सिन्धुशोषणम् ।**
**पुनर्नावाप्तुमावासं नगरेषु सुखावहम् ॥"**

अन्धः किं वाञ्छति ? नयनयुगलम् । इदानीमलं दुश्चिन्तया । अयं सेवक एतादृशि सेवाकर्मण्येवात्मानं नियुज्य स्वोदरं प्रसादयति । रिक्तावासान् संसूच्य यथारुचि जनान् तत्र निवेश्य पुण्यमर्थञ्च कामयते।"

शुष्कप्रायेषु व्रीहिकेदारेषु मेघवर्षमिव सुधारसनिष्यन्दिनी तद्वाणी कर्णकुहरं प्रविश्य नैराश्यसन्तापतप्ताय मानसाय सञ्जीवनं प्रददौ । तथापि मनसो वृत्तिस्सहसा विश्वासकोटिं नाधिरूढा । हर्षनिर्भरमनाः तं पुरुषाकृतिं देवदूतं

मन्यमानो विस्मयविस्फारितचक्षुषा निपीय स्ववेदनाकथनेन विगतचिन्ता-लघुरभवम् ।

स पुरुष उवाच – "भद्र, वयं माध्यमकाः । माध्यमकवंशोत्पत्तिर्बहुरूप-रचनाचतुरस्य भगवतो विष्णोरंशादेव भूतेति पौराणिकमाख्यानम् । क्षीरोदधिमन्थ-नावसरे पीयूषकलशोद्गमनेन तदमृतरसपानाय देवदानवयोर्मध्ये विवादो जातः । तत्र भगवान् विष्णुरेव मोहिनीरूपमाध्यमको भूत्वा विवादशान्तिमकरोत् । ततः प्रभृति माध्यमकवृत्तिः प्रचलति । अद्यापि सामाजिकजीवने एतादृशीं निःशुल्कवृत्तिं स्वीकृत्य बहवो जना विवादविवाहादिप्रयोजनाय सेवार्पणं कुर्वन्ति । किन्तु व्यापारादिक्षेत्रेषु शुल्कवृत्तिमङ्गीकृत्य मादृशा माध्यमका आजीविकामपि व्युत्पादयन्ति । वंशपरम्परयाऽहं गृहभूम्यादिकेषु कर्मसु माध्यम-कभूमिकां निर्वहामि । विगतवर्षकतिपयाद् भाटकावासानां महतीमनुपलब्धिं नगरेष्वनुभूय मयाऽस्मिन्कर्मण्यपि पदं धत्तम् । आवासानां मासिकभाटक-मूल्यस्यार्धमात्रं द्रव्यमेव मम शुल्कम् । अभ्यर्थिजनेन गृहस्वामिनः सम्मेलनं कारयित्वा तयोः समायोजने सुनिश्चिते जाते, भाटकाग्रिमार्पणं सहाहमपि स्वशुल्कमाददामि । अयमेव मम कार्यविधिः । विभिन्नायवर्गजनोचितानां भाटका-वसानां विवरणं सदैवानुसन्दधामि । इदानीमपि मद्दृष्टौ शताधिका रिक्तावासाः वर्तन्ते । आख्यातु भवान्, कियद्भाटकमूल्योचितः कीदृश आवासो भवते रोचते ? नगरस्य कस्मिन् क्षेत्रे भवतः कार्यालयोऽस्ति ? कुटुम्बे कियन्तः सदस्याः सन्तिः ? एतत्सर्वं विज्ञाय भवत्सौविध्यमालोच्य समुचिते भाटकमूल्ये आवासमुपहरिष्यामि ।

मया तद्वाञ्छितं सर्वं सविवरणमाख्यातम् । मम कार्यालयसङ्केतं विलिख्य तेन भणितम् – "भवत्विदानीं गच्छतु । अहं श्वः तत्र कार्यालयं गत्वा भवद्दर्शनं करिष्यामि । तत्रैवासानां विवरणं संसूच्य भवन्तं नीत्वा तान् दर्शयिष्यामि ।" तत्प्रत्ययेनोपसर्गबलादर्थान्तरं नीयमानो धातुरिवाहमप्याशानिर्भरमानसः सहायकेन सह स्वकार्यालयातिथिकक्षमाजगाम । सहायकोऽपि मां बहुधा समाश्वास्य स्वगृहं ययौ ।

अपरेद्युः 'स आगमिष्यति न वेति' संशयदोलाधिरूढोऽहं चिन्तितमनसा तं प्रतीक्षमाणः क्षणमप्येकैकं युगमिव कलयन् कार्यालयकक्ष उपविष्टवान् । मनः कस्मिंश्चदपि कर्मणि न पुना रमते स्म । पर्याप्तप्रतीक्षानन्तरं सं त्वपराह्णवेलायां समागतः । तेनागत्य पञ्चावासानां विवरणं समर्पितम् । स्वकीयं सहकर्मिणमाहूय तमेदं विवरणं प्रदर्श्य ततस्तेन माध्यमकपुरुषेण सहावां रिक्तावासदर्शनाय निर्गच्छतः । ते सर्वे आवासा अस्माभिरवलोकिताः । तेष्वेकः सर्वविधिना मह्यं रोचते स्म । अस्मिन् क्षणे मया वर्णनातीतं महत्सुखमनुभूतम् । अथेदानीं महत्कष्टमनुभूयावाप्ताय निजनवीनावासायाश्रुबिन्दुभिः अनर्घ्यमर्घ्यं निवेद्य तत्स्वामिनं प्रति निवासाधिकल्पान्निश्चेतुं द्विगुणितोत्साहपदक्रमेण गच्छामि । अस्मिन् क्षणे स्वभार्यायाः शुभदं वामनयनस्फुरणं मनसा स्मरामि ॥

**अहो बत महत्पुण्यं विधातुं स्वयमुद्यताः ।**
**एते माध्यमकाः ख्याता मोहिनीरूपसम्भवाः॥**

**भोजनं दुर्लभं लोके वस्त्रञ्चापि सुदुर्लभम् ।**
**दुर्लभं शरणं चेद्धि जीवनं नरकायते ॥**

**कथनं लेखनं नूनं सुकरं स्यादधिचिन्तनम् ।**
**नगरे दुष्करं तत्र भाटकावासमार्गणम् ॥**

# ॥ गृहस्वामी ॥

एकदा मया दूरदर्शने हास्यव्यङ्ग्यस्यायोजनं दृष्टम्। तत्रैकोऽभिनेता गृहस्वामिभाटकावासिनावधिकृत्य हास्यनिर्भरं प्रयोगं प्रस्तुतवान्। गृहस्वामी स्वगृहे निवसन्तमेकं भाटकावासिनं ब्रवीति – " कथं भोः! अद्य मासस्य दिनाङ्कः कः? नास्ति भाटकर्पणस्य काऽपि चिन्ता? नेदं गृहं निर्द्रव्यनिर्मितम्। भूयोऽपि ब्रवीमि, त्वमन्यामेव स्वकीययावासव्यवस्थां साधय। नाहं त्वादृशमावासिनं कामये। यदि परश्वदिनं यावद् भाटकमूल्यं मम करस्थं न भविष्यति, तत्फलार्थं नाहं दोषावहः। अपि च भोः, सवत्सा धेनुर्विलसति तव किन्तु बिन्दुमात्रमपि तक्रं न जानामि। सर्वं दुग्धं स्वयमेव पिबसि! मृषाऽपि न पृच्छसि। भवतु, गच्छामि साम्प्रतं किन्तु मद्वचो न विस्मर्तव्यम्।" भाटकावासी तु गच्छन्तं तं विस्फारितनेत्रेण सुचिरं व्यलोकयात्।

कस्मिंश्चिद्दिने प्रत्यूष एव स भाटकवासी गोदुग्धपूर्णपात्रमादाय गृहस्वामिनो देहल्यामुपस्थितो बभूव। विलोक्य च गृहस्वामी प्रश्नमुद्रया नेत्रे व्यचालयत्। सोऽपि भाटकावासी तत्पात्रं तस्य हस्तयोः समर्प्य करपुटं विधाय जगाद् – "अद्य नागपञ्चमीति मया विचारितं यद्दुग्धपानं भवत एव प्रवर्तताम्।"

मन्येऽहं, ये सम्प्रति महानगरेषु स्वमनोऽनुकूलं भाटकावासमुपलभ्य ससुखं निवसन्ति, तेऽतिभाग्यशालिनः कृताश्वमेधयज्ञाः, समुत्तीर्णदुस्तरसागराः, लङ्घितोच्चगिरिशृङ्गाः, आस्वादितामृतरसाः, लब्धकल्पवृक्षमूलाः, दैवेन दत्तहस्ताः पृथिव्यामपि देवप्रियाः। अपरञ्च, स्वर्णे सुगन्धिस्स्याद्यदि गृहस्वामी तस्मिन् गृहे न वसति, तस्मिन्नेव गृहे वसन्नपि भाटकार्पकैः सह साधु व्यवहरति। यतो ह्यस्मिन् विषये प्रायेण श्रूयते –

**सदा वक्रः सदा क्रूरः सदा मानधनापहः ।**

**लोलुपो हि गृहस्वामी त्रासदः कोऽपि दुर्ग्रहः॥**

ग्राम्योऽप्यहं प्रयोजनवशान्नागरिकः संवृत्तोऽस्मि । यापिते सुदीर्घे भाटकावासजीवने मयाऽनुभूतं सत्यमिदं रहस्यं गृहस्वामिनः तन्नगरे स्थायिवृत्तीनां स्वगृहे वासं दातुं नोत्सहन्ते, स्थानान्तरणविषयाणामधिकारिवर्गाणामेव भाटकावासं ददति । यतो हि भाटकावासी स्थानान्तरितः स्वयमेव गृहं विमुच्य निर्गच्छति । अथ चैते निरापदो व्यवसायिन आगामिजनाय भाटकमूल्यमपि वर्धयन्ति । भवतु किमन्यैरालपैः? प्रस्तौमि गृहस्वामिकथाम् । कर्णं दत्वा श्रृण्वन्तु–

मदीयः पूर्वो गृहस्वामी स्वजातौ त्वपवादरूपेण तिष्ठति । सर्वे साश्चर्यं कथयन्ति – "कीदृशोऽयं गृहस्वामी ? कदापि स्वकीयैः भाटकावासिभिः सह नैव विवदते, मासस्य प्रथमदिनाङ्क एव भाटकस्य शिरोवेदनां न व्युत्पादयन्ति, येन केनापि व्याजेन मिथ्यारोपणं न विदधाति, स्वकीयावासिनां मनःकल्पितदोषान् निरर्गलं न प्रलपति । आधुनिकगृहस्वामिनः किमपि लक्षणमस्मिन् न लक्ष्यते ।" कथमहमस्य गृहे लब्धपदोऽस्याप्येका कथा वर्तते ।एकदाहं भाटकवासमार्गणाय नगरे पर्यटन्नासम् । एकस्थले जनसङ्कुले राजपथे मया दृष्टं – चालकस्य प्रमादेनैको वृद्धपुरुषः स्कूटरयानेनाक्रान्तस्संघट्टवशात्तत्रैव संघातितो भूमौ पपात । भीतश्चालकः स्ववाहनस्य गतिं विवर्द्धय तं वृद्धपुरुषं तस्यामेव दशायां विमुच्य पलायितः । केचन तं सदयं दृष्ट्वापि नोत्थापितवन्तः । अन्ये तु तदुपरि दृष्टिनिक्षेपमपि न कृतवन्तः । अहं वेगेन तमुपसृत्योत्थाप्यैकस्मिन् वाहने कृत्वा चिकित्सालयं नीतवान् । महता सङ्घातेन वृद्धो मूर्च्छित आसीत् प्रभूतो रक्तस्रावोऽपि भूतः । स्वकार्यं विस्मृत्य मया वृद्धस्य परिचर्या मनोयोगेन कृता । न जाने सर्वथाऽपरिचितोऽपि स वृद्धः कथं ममात्मीय इव सञ्जातः । औषधिप्रभावेण सः लब्धचेतनो निजपार्श्वे मां प्रेक्ष्य सर्वमपृच्छत् । मयाऽख्यातं निशम्य प्रीतमनाः स मां देवदूतं मन्यमानः कृतज्ञतां भूयोभूयो ज्ञापितवान् । चिकित्सकमापृच्छ्य गृहमानीतः वृद्धो मामपृच्छत् – " किं ते प्रियं करोमि ?" मया भणितम् – "भाटकावासमार्गणं करोमि । यद्यत्र भवत्साहाय्यो भवेत्कोऽपि ?" वृद्धो

झटित्याह – ''मत्कृते भवता बहुकृतम् । भवन्तं स्वभवन एवावासिनं कल्पयामि । मम महत्सौभाग्यं यदि सन्निधौ स्यात्त्वादृशो मानवः।'' अथ तस्मिन्नेव दिने सकुटुम्बेन मया तत्रावासः कल्पितः। षड्वर्षपर्यन्तं ससुखं तत्रावसम । मम दौर्भाग्यात्तस्मिन् वर्षे वृद्धस्य जामाता स्थानान्तरितो भूत्वाऽस्मिन्नेव नगरे आजगाम । स्वपरिकरैः सार्धं श्वसुरगृह एव वासमकल्पयत् । वृद्धस्तु मां किमपि नोवाच किन्तु परिस्थितिमाकलय्य मयाऽन्यं वासमनुसन्धाय स्वयमेव तदावासो निर्मुक्तः। अयं मे गृहस्वामी सर्वमानवोचितगुणानामागार आसीत् ।

मम वर्तमानो गृहस्वामी कश्चिदद्वितीयो जन्तुः। प्रथमचाक्षुष प्रत्यक्ष एव तस्यानुभावोऽवभासितः। पैतृकपरम्पराप्राप्ते द्वे भवने तस्याजीविकाधारे स्तः। एकस्मिन् भवने भाटकावासिभिः सह स्वयमपि वसति, द्वितीये केवलं भाटकावासिनां सङ्कुलता वर्तते । अत्र सभार्यः गृहस्वामी सारिकासारमेयाभ्यां सहोषितः।एक एव पुत्रो राजकीयसेवायां कुत्रचिन्निरतः।कन्याप्येकैव परिणीता स्वपतिगृहे वसति। गृहस्वामिजीवनयात्रारम्भः सङ्कटापन्न आसीदिति श्रूयते। बाल्यकाल एवास्य जननी कालकवलिता बभूव । अयमेव वंशाङ्कुरः कथमपि पोषणीयो यत्नेनेति भगवता महाकालेन सम्प्रार्थ्यमानोऽस्य जनकः स्वात्मजं नयनपुत्तलिकैवैनं ररक्ष पुपोष च । किन्तु हा, दुर्दैवेन पितुश्छायाप्यपाकृता। शैशव एव विहितोद्वाहस्यास्य पत्नी प्राप्ते वयसि गृहानीता कौटुम्बिकजीवनस्याधारत्वं कल्पयामास । यौवनसुखं महतामोदेनोपभुज्य बहुकालं व्यतीत्य सन्ततिद्वयं लेभे । जायागृहीतगार्हस्थ्यगुरुभारो विगतचिन्तोऽयं वैभवसुखसम्पन्नां दिनचर्यां स्वीकृतवान् । भाटकराशिव्याजेन चञ्चलापि चाञ्चल्यं विहाय तमनुसेवते। केवलं सरस्वत्याः प्रसादो न्यूनत्वं भजते । किन्त्वनेन का हानिः? द्रविणमांसलता सर्वमपि गुणाभावमाच्छादयति।

ब्राह्मे मुहूर्ते गृहस्वामिकृतेन श्रीराचरितमानसस्य सस्वरपाठेनास्माकं निद्राऽपयाति । पूजान्ते तस्य गभीरेण शंखघोषेण शिशवोऽपि शयनं विहाय हस्ताभ्यां चक्षुषी परामर्शयन्तः प्रसादप्राप्तिप्रलोभेन त्वरितवेगाः पूजागृहाभि-

मुखमभिद्रवन्ति। ते सर्वे नग्नार्धनग्ना यस्यां कस्यामपि मुद्रायां द्वाराद्बहिरेव सम्भूयोत्कमनाः प्रतीक्षारता भवन्ति। सोऽपि विहस्यैतेषां बालभगवतां कृते नामग्रहणपूर्वकं महता स्नेहेन प्रसादं करपल्लवे वितरति। ततश्चोत्थाय स हनुमन्निकेतनं तस्य भगवतो दर्शनार्थं गच्छति। मन्दिरे प्रविश्य महच्छ्रद्धया साष्टाङ्गप्रणतिं विग्रहसमक्षं निवेद्य, नामसंकीर्तनपुरस्सरं प्रदक्षिणां विधाय घण्टानादेन समं विश्रान्तिं लभते। तत्राजिरे सुचिरं स्थित्वा 'हनुमानचालीसा' इत्यस्य पाठं कृत्वा पुनः पुनः शिरसा प्रणम्य, तत्र विहरन्तमाञ्जनेयरूपं वानरयूथं चणकान् भोजयति। अथ गृहाभिमुखीभूतः स नित्यमेव कामप्यपूर्वां शोभां बिभर्ति। खल्वाटशिरोभाले वातात्मजवपुर्लेपप्रसादस्निग्धसिन्दूरस्य लम्बाकृतितिलकं कर्णान्ते कण्ठे चापि तट्टीकनं विरच्य, लोमाच्छादितमपि देहमुत्तरीयेणाच्छाद्य, शिथिलं धौतिकाबन्धं पुनः पुनः स्वतुन्दिलोदरे दक्षिणकरेण सारयन्, वामकरेण पत्रद्रोणनिविष्टमोदकप्रसादं सन्धारयन्, दीर्घैः पदान्तरैः मार्गं लंघमानोऽध्वनि गच्छतां जनानां यथायोग्यमभिवादनं स्वीकुर्वन् स्वपालितेन शुनानुयात आकाशोर्ध्वंगते सवितरि गृहं प्रति याति।

मम गृहस्वामी बदरीफलमिव बाह्यतः कोमलत्वमन्तस्तः काठिन्यं भजते। लौकिकेष्वाचारेषु व्यवहारेषु च स सर्वथा मानवोचितगुणान्–स्नेहं, दयां, सख्यमित्यादिकं प्रकटयति किन्तु प्राप्ते वित्तप्रसंगे, विशेषतो भाटकावासिभिस्सह, तस्य मानवता न जाने कुत्र विलुम्पति। तत्र स द्रव्यक्रूरः पाषाणहृदयः शास्त्रवित्तापहारी खलु वित्तापहारी प्रतिभाति। तदा वयं स्मरामः–

**हस्तिदन्तनिभं सर्वं वचनं वर्तनं तथा।**
**द्रव्यलाभप्रसंगेषु कस्यास्यं न विवर्तते॥**

**अपूर्वः कोऽपि संसारे विद्यते यदि मानवः।**
**अवित्तोऽपि सुचित्तस्याद्वित्ताय न कुवृत्तिकः॥**

**मदीयोऽयं गृहस्वामी भाटकार्पितजीवनः।**
**यस्य नूनं वृथा प्राणाः भाटकं हाटकं विना॥**

स्वगृहं भाटकञ्च विहायान्यवृत्तेषु मे गृहस्वामिन औदार्यं प्रशंसनीयमेव। अतोऽस्यानुभावद्विविधता सर्वैः नालक्ष्या। एते भवने तदर्थं कल्पवृक्षे स्तः। यदि भाटकावासिभिस्तत्र काचिद्विकृतिस्स्यात्, स नैव सहते। स प्रायेण भवने निभृतं पर्यटति तद्द्रष्टुकामः। कः किं करोति? कुत्र कदा च गच्छति? कुतश्च कदायाति? किं कथञ्च पाचयति? किं खादति? सर्वमेव स जानाति। सदैव भवनस्य सुरक्षां स्वच्छतां निर्दिशति। द्वारे, चत्वरे, सोपानेषु वापि च गृहस्य कस्मिन्नपि कोणे तृणमप्यवस्करं निरीक्ष्य क्रुध्यति। भटकावाप्तौ तेन निर्धारित-तिथ्युल्लंघनं नैव सह्यते, किमप्यौदार्यञ्च न प्रदर्श्यते। स्वनिन्दाशंकया दूषितमनाः स भाटकावासिनां परस्परालापं प्रच्छन्नं शृणोति। तद्भार्या सदैवावासि कुटुम्बानां मैत्रीप्ररोहच्छेदने कुचेष्टया प्रयतते। आवासिभिर्जलस्य विद्युतश्चोपयोगे तयोर्दृष्टि-स्सततमनिमीलिता तिष्ठति। कस्यावासे को गच्छतीति गृहस्वामिनी सुष्ठु निभालयति। आगमनदिवसाद्व्यतीते वर्षत्रये ममायं गृहस्वामी निजावासं रिक्तं कारयितुं सुमहदुद्योगं वितनोत्यन्यथा भाटकमूल्यं वर्धयति।

मद्गृहस्वामिनो वर्णोच्चारणं बालानां कौतुकमनोरञ्जनाय प्रभवति। स महात्मा सकारशकारयोरुच्चारणं फकारेणैव करोति। एकदा स स्वविश्रयविश्राव-विश्रामाय भवनप्रस्तरे स्फुटितसन्धिरेखागर्तं संरोधकपदार्थेनाविश्रमः पूरयन्नासीत्। तत्कर्मणि गृहस्वामिनी क्लिष्टसहायिकाभूत्। मां गृहान्निर्गतं दृष्ट्वा तत्रस्थ एव स आकारितवान् – "फ्रूयतां फ्रूयताम्। पफ्यतु, फ्वेदफलिलेन फ्नातोऽहं ललाटन्तपातपेऽत्र फन्धिफन्धानं करोमि। अफ्मिन् कक्षे भवान्निवफति। कमपि फाहाय्यं करोतु। कुत्र ते तनयः फुफीलः? क्षणं यावत् फहायो भवतु।" एतच्छ्रुत्वाऽहं स्वतनयमाहूय, गृहस्वामिनः साहाय्यं कर्तुं निर्दिश्य कार्यालयमगच्छम्। सायंकाले गृहमागतेन मया बालकानामनुकृतिरूपकं श्रुतम् – "फ्वफ्ति तेऽफ्तु। अद्य फुभे फ्रीफंवत्फरे फ्रावणफुक्लफप्तम्यां तिथौ फ्रीफुफीलफंकरमिफ्रफ्य फदने फ्रीफत्यनारायणफ्य कथा भविफ्यति। फ्रवणायावफ्यमेव फमागच्छतु। नमफ्ते।" श्रुत्वा च हास्यनिर्भरोऽप्यहं – "यदि गृहस्वामी श्रोष्यति, भविष्यत्येवानर्थमेतेषा-मुच्चारणानुकरणादिति" विचिन्त्य तान्सर्वान् क्रोधमलीकं प्रदर्श्य निवारयामास॥

एतादृशो गृहस्वामी मयावाप्तो न संशयः।
शनकैर्वक्ष्ये तद्वृत्तं भीतोऽस्मि स शृणोतु न॥
यत्किंचिदपि मया दृष्टं तद्रूपं दुर्दर्शनम्।
आवेदयामि तत्सर्वं सत्यमनतिविस्तरम्॥
गृहस्वामिकथां श्रुत्वा पथ्यां भाटकवासिनः।
हर्षमोदभरा नूनं भविष्यन्ति चिरायुषः॥

## ॥ गृहस्वामिनी ॥

मम गृहस्वामिनः पत्नीव्रतकथा लोकविश्रुता वर्तते। स्वगृहिणीमपृष्ट्वा स तृणमपि न स्पृशति। प्रथमदर्शने यदाऽहमावासप्राप्तये तं निवेदितवान्, तेन कथितं – "आवासस्तु रिक्त एव। किन्तु गृहिणीविमर्शं विना किमपि वक्तुं न शक्यते। भवान् श्व आगच्छतु।" अपरेद्युस्तत्रगतेन मया दृष्टा गृहस्वामिनी। सा मां भूयोभूयो – "भवान् किं करोति? कुटुम्बे के के सन्ति? सामिषभोजिनो भवन्तो निरामिषभोजिनो वा? प्रायेण कियन्तोऽतिथयः समागच्छन्ति? अत्र नगरे के सम्मान्या जना जानन्ति भवन्तम्? अपि च, तत्र वासत्यागे किं कारणम्?" इत्येवंविधान् प्रश्नान् पृष्ट्वा लब्धैर्मदीयैरुत्तरैर्विविधा मुखाकृतयो निर्माय ताम्बूलचर्वणैस्सह गल्लालपैः परिधानं रक्तकषायशबलं कुर्वाणा सावासोपलब्धिविषये सविस्तारं निर्दिदेश। यथा हि – भाटकमूल्यं प्रतिमासस्य चतुर्थदिनाङ्कं यावद्देयं भविष्यति। गृहद्वारं रात्रौ नववादनपर्यन्तमेवानावृतं स्थास्यति। महानसे धूमोत्पादकमिन्धनं नैव प्रयोक्तव्यम्। भाटकावासविषयेऽज्ञातं जनं किमपि न सूच्यम्। गृहद्वारे नामपट्टिकास्थापनं, गृहे कन्दुकादिभिः क्रीडनम्, नित्यमेवातिथिसम्मेलनं नानुमतम्। अत्र गृहे धूमपानं, मदिरापनं सामिषभोजनञ्च सर्वथा निषिद्धं वर्तते। एतत्सर्वमवधार्यैवात्र गृहे पदं कर्तव्यम्। मन्निर्देशपालने यदि काचित्त्रुटिः स्यान्नाहं कारुण्यं वितनोमि। भवान् जानात्येव कीदृशी महर्घता वर्तते। अस्मिन् युगे मादृशो जनो यदि गृहं निर्माति तदेव बहु मन्तव्यम्। यदि गृहस्य क्षतिर्भवेत्, कोऽपि लाभो न स्याद् भाटकप्रपञ्चेन किम्? गृहनिर्माणे यो धनराशिः विनियोजितः, यत्कष्टमनुभूतं तत्सर्वस्य यदि काम्यं प्रतिफलं न स्यात्, उलूखले शिरोदानस्य किं तात्पर्यम्? अपि भवता सर्वमवधारितम्? मया शिरःकम्पपूर्वकं शिरोधार्यमिति व्यक्तम्। तत आरभ्याहं तद्गृहे एव निवसामि।

बालखर्जूरवृक्षेण सङ्गता हस्तिनीव, छातछागशिशुना सह स्थिता महिषीव स्वपतिसङ्गता गृहस्वामिनी कामप्यपूर्वाभिख्यां विधत्ते। प्रभूतप्रयुक्ततैलचिक्कणसंहृतकेशसीमन्ते प्रपूर्णविपुलसिन्दूरचूर्णराशिना श्यामोपलनिचयमध्यप्रवहन्तीं तन्वीं रक्तप्रवाहतटिनीं स्वशिरसि समुद्वहन्ती, सततताम्बूलचर्वणवशान्निर्गत्योभयतोऽधरोष्ठकोणतोऽनुलिप्तकपोलं रागरञ्जितं व्यापादितमूषकशोणितशोणमार्जरीमुखमिवाननं बिभ्राणा, श्याममाषनिभदन्तान्तरं निरन्तरं निम्बसृकयानुबेधमाना, सायंकालमेघपटलमध्यविराजितारुणमण्डलेनेव ललाटपट्टे रक्तचूर्णविरचिताङ्गुष्ठप्रमाणगोलकेन तिलकिता, भवनोपरिनिःसृतमहाप्रणालेनेव दीर्घोन्नतघोणावंशेन भूषिता, नासिकामभितः स्निग्धघनाञ्जनलेखावेष्टितं विभक्तबालाम्रखण्डाकारं नयनयुगलमितस्ततो विलोलयन्ती, द्वयोरपि कर्णयोर्विरचितछिद्रपंक्तिपिनद्धलघुस्वर्णताटङ्कबहुला, मण्डूकग्रीवानिभे कण्ठे कृष्णसूत्ररचितप्रतिसरं स्वान्तःकालुष्यकलिकलाकलापावगुण्ठनप्राकारमिव दधाना, पांत्रभाण्डमार्जनकलुषितकरतलौ खणखणायमाणमलिनकाचकङ्कणिकावलयितौ गृहकर्मकर्कशकरौ कूर्चांगुलिमुखौ धारयन्ती, तुन्दिलोदरी, स्थूलकटिवेष्टितराजितराजतमेखलापिनद्धलम्बमानशोणसूत्रग्रथितकुंजिकागुच्छका, पीवरतनुभाराधारं श्यामप्रस्तरपुंजमुद्वहन्तं स्तम्भयुगलमिव नूपुरनिगडितमलक्तकलिप्ततलपार्श्वं चरणद्वितयं धारयन्ती, मे गृहस्वामिनी स्ववर्णतया रात्रितमसि निमज्जिताकारा, दिवसे प्रकाशे च सावरणकज्जलगिरिखण्डाकृतिर्देदीप्यमाना, श्यामाऽप्यश्यामा सालंकाराप्यनलंकारा, पामराऽप्यपामरा, नागरिकाऽप्यनागरिका, पाकदक्षाऽप्यपाकदक्षा, सवर्णाऽप्यवर्णा, बहुलालापाऽप्यबहुलालापा, पुण्डरीकमुखी न च पुण्डरीकमुखी, गौरवशालिनी न च गौरवशालिनी प्रायेण स्वताम्बूलकरङ्कमादाय गृहस्य बाह्यप्रकोष्ठनिविष्टचतुष्पादकाष्ठफलके सदैवोपविष्टा द्वारसंसक्तदृष्टिः दृश्यते। तत्काष्ठफलपार्श्व एव भूमौ साहसप्रियः सारमेयः पिञ्जरे च स्नेहसंवर्धिता सारिका तिष्ठति। प्रायशः प्रतिवेशिनीभिः सङ्गताथवा सैकाकिनी शङ्कुलया पूगीफलं कृन्तति, ताम्बूलपत्राणि व्यवस्थापयति, ताम्बूलगुटिकामारचयति, सारिकामुपदिशति सारमेयं सुश्रूषति वा। एतत्सर्वं कुर्वाणा सा पिहितेनापि मुखेनास्फुटं मधुरं मधुरं किमपि गायति।

सूक्तं वृद्धैः – 'गृहिणी गृहमुच्यते ।' अत्राहं नूनमस्यास्सूक्तेस्सार्थकतामनुभवामि यतो हीयं सकलामपि गृहोपकरणव्यवस्थां स्वयमेव विदधाति । गृहे निवसतां भाटकवासिनां सर्वमपि क्रियाप्रपञ्चं सूक्ष्मं सुष्ठु निभालयति । ते भवने कामपि विक्रियां न व्युत्पादयन्तु, निर्देशाननतिक्रम्य व्यवहरन्तु, नियतकाले भाटकमूल्यार्पणं कुर्वन्तु, यथोचितमेव विद्युतो जलस्योपयोगं भवेदिति सर्वोऽपि एव नियोगः । स्व शुना सह काष्ठफलकारूढा सा साक्षाद् भैरवीघ प्रतिभाति । यदायं पशुपुंगवः सारमेयोऽपरिचितं गन्धमाघ्राय स्वदेहं विकम्प्य समुच्छ्रितकर्णपुच्छः रौद्रध्वानोऽध्वा धावति, तदा सापि सहसा समुत्थाय, "कं कथं द्रावयसि रे" इति तं सम्बोध्य निवार्य चाथागतं जनं, "मा भैषीति" समाश्वास्य क्रूरदौवारिक इव पृच्छति –

**"कस्त्वं भोः ब्रूहि मत्सर्वं हेतुश्चागमनेऽत्र कः ?**
**कस्मात्त्वमत्र द्वारस्थः कमुद्दिश्य प्रवर्तसे ??**
**प्रवेशो यदभीष्टः स्याद् याथातथ्यं निवेदय**
**यद्यहं परितुष्टास्मि प्रविष्टोऽसि न संशयः ॥"**

इत्येवं बहुशः पृष्ट्वा यदि तस्याः मनःसमाधानं स्यात् तदा स द्वारस्थः प्रवेशायानुमतो भवेदन्यथा द्वारादेव निराक्रियते । तस्या व्यवहारेणानेन कश्चिदतिसाहसप्रिय एव तत्रागमनायोत्सहते । कदाचित्सा मया पृष्टा – "देवि ! स्वाभीष्टज़नदर्शनोत्सुकैस्सह कथमेवं व्यवहरसि ?" मय्यपरिसमापितप्रश्न एव सस्मितमुखी सोवाच – "शिक्षितोऽप्यशिक्षितवद् ब्रवीसि ? अप्यन्यल्लोकात्समागतोऽसि ? न पठसि वार्तापत्राणि, न शृणोसि आकाशवाणीं, न पश्यसि दूरदर्शनम् ? नानुभवसि कीदृशी आतङ्कवादविषवल्लरी व्याप्नोति भुवम् ? एते रक्तबीजातंकवादिनः कदा कुत्र किं कुर्वन्तीति को जानाति ? कस्मिन् वेशे को भ्रमति ? वयं स्वगृहेऽपि न सुरक्षिताः । उक्तं हि महाभारते – 'विश्वस्तं नातिविश्वसेत् ।' अतएव यद्यहमपरिचितं जनमीषन्निर्दयं पृच्छामि तत्का हानिः ? अस्मिन्विषये न

कस्यचिच्छ्रिणोमि । मया सर्वसंरक्षोपायश्चिन्तनीयः । यदि कोऽप्यन्यथा मन्यते, स मद्गृहं त्यक्त्वाऽन्यत्र गमनाय स्वतन्त्रोऽस्ति ।'' एवं गृहस्वामिन्या द्वारपृच्छा-प्रयोजनं विज्ञाय मम मुखं मुद्रितमभवत् ।

एकदा मे गृहस्वामी स्वभार्यास्वभावप्रतिभां विवृण्वन्नेकं मनोरञ्जकं वृत्तान्तं श्रावयामास । भवानपि शृणोतु – गृहस्वामिवंशैकतन्तुस्तत्रभवान् कुमारो विवाहवयः प्राप्य विराजते स्म । तस्मै स्वकन्यकां प्रदातुं बहवोऽपि पितरः स्वसर्वस्वमादाय प्रसादनाय गृहस्वामिनं परितः भ्रमन्ति स्म । तेष्वेकः कुटिलाशयः प्रयत्नवानासीदन्यानतिक्रम्य । किन्तु वरपक्षे तदनभीष्टताऽसीत् । कथमस्मान्मुक्तिः स्यादिति व्यग्रमना गृहस्वामी स्वभार्यां पप्रच्छ । सा क्षणेनैव चिन्तितोपाया स्मयमाना स्वीयां कार्ययोजनां निवेदितवती । अन्येद्युः यदा स विवाहसम्बन्धिनीं मन्त्रणां कर्तुमीहमानो द्वारि तिष्ठति तदा दत्तसंकेता गृहस्वामिनी प्रतिवेशिगृहेभ्यः समाहूय नग्नपादान् कुलायकेशान् जीर्णकञ्चुकान् बालकान् तान् मिष्टान्न-प्रलोभनेन सर्वं करणीयमुपदिश्य तत्र प्रेषयामास । ते तत्र गत्वा रोदितुमारब्ध-वन्तः । प्ररुदितान् तान् पृष्टवान् स कन्यापिता सस्नेहम् । बाष्पकण्ठास्ते सर्वे ऊचुः – ''वयं बुभुक्षिताः । गृहे भोजनं नास्ति । माता ताडयति ।'' तदवलोकनं श्रवणं तदनु किमपि चिन्तनं विधाय स शनकैरुत्थाय निष्क्रान्तः पुनर्नायातः ।

लोके विश्रुतमेव न रमणीयोऽपि स्वभावो दुरतिक्रमणीयः । गृहस्वामिनी मदीयानधिगताक्षरपरिचयापि व्यञ्जनाविधानेऽन्योक्त्यलङ्कारप्रयोगेऽतिनैपुण्यं भजते । कञ्चन बद्धवैरिणं सा यथावसरमन्योक्तिव्याजेन व्यंग्यबाणैर्मर्माहतं करोति । अप्रियं जनमालक्ष्य कुक्कुरकाकसूकरगर्दभादिमिषेण सभाजयति । यथा हि – पररोटिकाखण्डवर्धित रे कुक्कुर! तवापि स्वाभिमानः ? अहो तव पुच्छ-वक्रता! कथं भूयसीमपि ताडनपीडां क्षणेनैव विस्मरसि! अन्यं प्रति, अरे रे पक्षिकुलकलंक! पूर्व जन्मपापमेव तवशरीरश्यामतां विशदयति । एवमेव साऽन-भीष्टं नारीवर्गमपि मार्जारीमहिषीमर्कटीमिषेण व्यवहरति । सर्वेऽस्याः वृत्तिमिमां जानन्ति । केचित्प्रहस्य व्युत्क्रामन्ते केचनासहिष्णवः क्रोधमूर्च्छिता अपि दन्तपेषणं कृत्वा विरमन्ति ।

मद्गृहस्वामिन्याः कठिनीकृतकाये नारिकेलफलसम्मितं सुकोमलं हृदयं शेते। सा बालनतिस्निह्यति। तेभ्यः प्राणोत्सर्गं कर्तुं प्रयतते। वसतेः शिशवः सायं प्रातः तां वृद्धां परिवेष्ट्य तिष्ठन्ति। सा सर्वान् शिक्षाप्रदाऽऽह्लादकाः कथाः श्रावयति, तैस्सह क्रीडति। बालगोष्ठीं तां मधुरेण समापयति। सर्वे बालाः तां विलोक्य मोदनिर्भरा भवन्ति। यदि कदापि कोऽपि बालोऽस्वस्थशरीरः श्रूयते, सा सर्वं कार्यजातं विहाय तमनुधावति। तदानीं बुभुक्षां पिपासां नानुभवति, केवलं सर्वथा तथा प्रयतते यथा स विगतबाधः स्यात्। बहुविधं मन्त्रभस्मादियुतं त्रोटकं विदधाति, हनुमन्निकेतनं गत्वा प्रसादसिन्दूरमाहृत्य तन्मस्तके टीकते, जगन्नाथपादोदकं, विश्वनाथविभूतिं मुखे ददाति, सर्वाः देघताः समाराधयति सेवते च तं वहुविधं विहाय सर्वं निजकार्यजातम्।

मम गृहस्वामिनीं विना वसतिगृहेषु कस्यचिदप्यायोजनस्य पूर्णता नैव सम्भाव्या। विवाहादिमंगलावसरेषु लोकमंगलगीतगानेऽस्या अग्रता नोपमेया। न जाने कियत्संख्यकानि तत्तत्प्रसंगपोषितानि गीतानि तस्याः जिह्वाग्रे विलसन्ति। सर्व एव समारम्भाः तस्याः गीतेनैव कृतार्थतां वहन्ति। अस्मिन्विधौ तदुत्साहस्त्व-वर्णनीयः। तदानीं तां प्रेक्ष्य जनाः मनसि कुर्वन्ति यदा सा न भविष्यति तदै-तेषामनुष्ठानानां सरसत्वं सौन्दर्यं कुतः ? धन्येयं मम गृहस्वामिनी प्रजापतेरद्भुता कृतिः। द्वारस्थां तां पूगीफलकर्तनव्यापृतां वीक्ष्य साशंकोऽहमभिवादनं करोमि न जाने सा मां किं वक्ष्यतीति॥

**मदीया गृहस्वामिनी वा त्वदीया, द्वितीया तृतीयाऽथवा स्यात्तुरीया।**
**वराकैर्भवेद्भाटकावासिभिस्तैः स्तुता पूजनीया समाराधनीया॥**
**तुष्टा प्रसन्ना जगद्वासमूला, रुष्टा भवेद्भाटकवासिशूला।**
**एवं हि देवी गृहस्वामिनी सा कार्या प्रयत्नेन पक्षानुकूला॥**
**उपेक्ष्योऽपि गृहस्वामी नोपेक्ष्या स्वामिनी सदा।**
**सफला मे कथेयं स्यात्तत्त्वं जानन्तु ते नराः॥**

●

## ॥ सुहासिनी ॥

एकदाऽहं रेलयानस्य प्रथमश्रेण्यां यात्रां कुर्वन्नासम्। यानस्य मदीये प्रकोष्ठेऽनेकानि आसनानि रिक्तान्यासन्। तत्राहमेकाकी स्वासन उपविष्टः पत्रिकापृष्ठेषु निमग्ननयनः पठनव्यापारव्यापृतोऽतिष्ठम्। कर्णे प्राविशत रेलशकटीप्रस्थानसङ्केतको ध्वनिः। पत्रिकापृष्ठाद् दृष्टिमपकृष्य वातायनद्वारेण मयाऽवतरणपटले[1] यात्रिसम्मर्दस्य विविधाश्चेष्टा अवलोकिता। कोऽपि शिरोन्यस्तां मञ्जूषामेकहस्तेनावधार्यापरेण जनानपवार्य दीर्घावगुण्ठनवत्यै नवोढायै मार्गं प्रयच्छन् बारम्बारं पश्चाद्ग्रीवाभङ्गेन, त्वरया चल, एह्येहि, पुरः पन्थानमालोकयेत्येतानि वचांसि प्रयुज्याग्रेसरति, कोऽपि विधृताङ्गुलिभार्यः स्वशिशुं स्कन्धमारोप्य यानारूढं यात्रिणमियं शकटी कुत्र गमिष्यतीति पृष्ट्वा नेयं स्वाभिलषितेति विज्ञाय सोच्छ्वासं विरमति, कश्चिज्जलपात्रमादाय जलमानेतुं धावति, कश्चन रक्तकञ्चुकधारिणं भाराक्रान्तं भारिकमग्रे विधाय निजारक्षितासनधारिणं यानमन्विष्यति, कोऽपि विदाकर्तुमागतैर्जनैस्सह सम्भूय निरर्गलं क्वचिन्मन्दस्मितं क्वचित्साट्टहासं क्वचित्साश्रुनयनं सबाष्पकण्ठमालपति प्रलपति विलपति वा, कश्चित्स्वजनाद् वियुक्तस्तमाकारयति, केचनैकस्मिन् याने स्थानमप्राप्यान्यं प्रत्यभिमुखिनस्त्वरयन्ति, त्वराविष्टेन केनचिदन्यत्र पश्यता संघट्टेन कस्यचित् फलविक्रेतुः फलान्येव विकीर्णानि, स तु तस्मै ग्रीवायामर्धचन्द्रं दत्वा तन्मूल्यायाधिक्षिपति, रक्षिपुरुषा विवादप्रशमनाय प्रयतन्ते, पत्रपत्रिकाविक्रेतारः लघुशकटीं चालयन् जनानितस्ततो विचालयन् मन्दं मन्दं सरन्ति, चायपेयविक्रेतारो हस्तेनैकेन चायाशयभाण्डमपरेण मृण्मयलघुचषकपात्रभरितं करण्डमादाय प्रतिगवाक्षं ग्राहककाङ्क्षया भ्रमन्ति, विविधवर्णरञ्जितक्रीडनकान्यादाय कश्चित्

---

१. प्लेटफार्म इति।

झणझणायमानं किंचन वादयन् मातृक्रोडे क्रीडन्तं शिशुमाकर्षयति। एवं मया बहूनि दृश्यानि तत्रापलकनेत्राभ्यां निभालितानि।

एतस्मिन्नेवान्तरे रेलशकटी शनैश्शनैः प्रचलितुमारब्धवती। सहसा मत्कर्णाभ्यां कस्यचिदागन्तुकस्य पगध्वनिर्गृहीतः। यावदहं वातायनदत्तदृष्टिं परिवर्त्य ग्रीवाभङ्गेनालोकयामि तावन्नातिदीर्घकर्तितकृष्णकेशकलापकां, चन्द्रशकलनिर्मितललाटफलकां, चञ्चलमीनाकृत्यञ्जनरजोलेखाश्यामलकषायितोदरायतमदिरेक्षणां, सुघटितदीर्घोन्नताग्रपार्श्वछिद्रपिनद्धरत्नकीलकभास्वर-नासिकां, रक्तप्रभातरलविभक्तविद्रुमविरचितौष्ठयुगलां, स्वर्णमयीतनीयसी-शृंखलावेष्टितकम्बुग्रीवां, कञ्चुकावृतकुचकलशां, क्षीणकटिमध्यां, हेमशृंखला-पट्टिकापिनद्धघटिकाबद्धैकहस्तेन लघुपेटिकामपरेण च तापनियन्त्रितजलपात्रं धारयन्तीं, पञ्चमहाभूतान्यपहाय विधिना नीलोत्पलदलसारेणैव विनिर्मितां, नभंस्तलाद्धरिण्रीतलमवतीर्णामाकाशलक्ष्मीमिव, तडिल्लतातर्जनवित्रस्तां जलदसमूहमपहाय पृथ्वीमापन्नां शरीरधारिणीं मेघच्छटामिव, क्षीरसागरे शेषशय्या-शयितषाण्मासिकदीर्घनिद्रानिलीनविष्णुविगलितदेहप्रभामिव सविग्रहां कोपादिहागतां, तरणितनूजाततटतमालतरुणतरतरुलरलच्छायामिव धृतकलेवरां, श्याम-पाटलवनाद्विनिर्गत्य समागतां लीलालक्ष्मीमिव, नीलमणिद्युतिप्राणां सञ्चारिणीं लावण्यलतामिव प्रायेण पञ्चविंशतिवर्षीयां दूर्वाकाण्डमिव श्यामां मनोऽभिरामां रामां पाश्चात्त्यवेषालङ्कृतामपश्यम्।

मद्दर्शनपथमायान्ती सा तु वायुवेगेनोद्वेलिता नीलजललहरिकेवापतन्ती प्रकोष्ठं प्रविश्य समक्षासने तस्थौ सोच्छ्वासं निधाय पेटिकां जलपात्रञ्चोर्ध्वाधारे। निर्मिमेषबद्धदृष्टेर्ममैकाग्रता तद्वचनेन भङ्गा जाता – "अहो, यदि किञ्चित्क्षण-विलम्बः स्यादियं शकटी मां परित्यज्य विनिर्गतैवासीत्। ईश्वरो मे दयालुः येनाहमापत्पयोधौ निमज्जनाद् रक्षिते" त्युक्त्वा सा मुद्रितनयना तूष्णीं बभूव।

इदानीं रेलशकटी तीव्रतरवेगेन धावति स्म। त्रिकटपरीक्षकः प्रकोष्ठे आगत्यावयोस्त्रिकटं निरीक्ष्य निजाभिलेखं पुष्टं कृतवान्। निर्गमनात्पूर्वं तेन सा

युवतिर्भणिता – "भगिनि, स्त्रीप्रकोष्ठेऽपि रिक्तमासनं वर्तते। यदि भवत्यै रोचते, तत्रापि गन्तुमर्हति।" किन्तु तया प्रस्तावोऽयमस्वीकृतः। अहं तु तथैव वातायनसंसक्तमुखो बहिर्गतानां दृश्यानामवलोकने निमग्न आसम्। शकटीजव-सापेक्ष्यं दूरस्था अपि वृक्षादयः शीघ्रमेव निकटं भूत्वा वेगेन पलायन्ते स्म। क्वचित्कृषकाः क्षेत्रेषु कृषिकर्मव्यापृता दृश्यन्ते। क्वचिद् गोपालकाः पशुचारणं कुर्वन्ति। शकटीरवेण भीतः कश्चिद् वत्सः पुच्छमुत्थाय वेगेन दूरं गत्वा साशङ्कत्रासमवलोकयति। एको गोपालबालः स्वलगुडमुत्थाप्य प्रहारमुद्रां नाटयति अपरश्च महिषीपृष्ठमारूढो नृत्यभङ्गिमां प्रदर्शयति। पाठशालायांगताः छात्राः कुतूहलेन शकटीं विलोकयन्ति हस्तसङ्केतैः किमपि कथयन्ति च। कुत्रचित्कटिपृष्ठ-विन्यस्तहस्ता वृद्धा यष्टिकामवलम्ब्य गच्छन्ती क्षणं विरम्य शकटीं पश्यति। एवंविधान्यन्यान्यपि दृश्यानि दृष्टिपथे निपत्य सहसैव विलुप्तानि भवन्ति स्म। प्रकटतया त्वहं दृश्यावलोकने रमामि किन्तु चित्ते सैव युवतिस्तिष्ठति। अन्तरान्तरे कदाचिच्चक्षुकोणेन तस्याश्चेष्टा निर्वर्णयामि। तदानीमासीच्च मे मनसि – "केयं युवती भविता ? आपदस्याः कीदृशी ? वेषेणानुभावेन चेयमाधुनिका कुलीना प्रतिभाति। कुत आयाति कुत्र च याति ? न भवति भीता यात्रायामेकाकिनी ? कथमनया त्रिकटपरीक्षकस्य प्रस्तावो नाङ्गीकृतः ?" एवं कुतूहलेन मेऽन्तःकरणे पदं कृतम्। एकान्ते युवतिजनेन सहावस्थानन्तु प्रथमं सङ्कटम्, जनस्यास्य प्रथमाभिभाषणमपि नोचितमिति सम्प्रधार्य मौनमवलम्ब्य पत्रिकापठनाय रुचिम-कुर्वम्। सापि जलमादाय मुखे स्वल्पं स्वल्पं कृत्वा कण्ठसेचनं कुर्वाणा पानीय-मतिचिरात्पीतवती। ततश्च लघुपेटिकामुद्घाट्य काञ्चित्पत्रिकां करे कृत्वा कालक्षेपाय यत्नवती बभूव।

आदिवसं शकटी धावमाना लघुविश्रामस्थलानि तिरस्कुर्वती बृहद्विश्राम-स्थलेषु यथाकालं प्राप्य नियतावधिपर्यन्तं विरम्याग्रेसरति स्म। कोऽप्यपरो यात्रिको नागतवान् तस्मिन् प्रकोष्ठे। सायंकाले चायपेयमाददाना सा मामप्यपृच्छदुष्ण-पानाय किन्त्वपरिचितेभ्यो यात्रायां पथि न किमपि ग्राह्यमिति न्यायेन मया

सौम्यतया मन्दस्मितेनास्वीकृतम्। पानं समाप्य सा मामुद्दिश्याब्रवीत्– "आर्य, भवदाकृतिरेवानुमापयति सदाशयताम्। वृद्धं सज्जनमालक्ष्य भवन्तं प्रति श्रद्दधति मे हृदयम्। एतदेव कारणं यन्मयात्रैव स्थातुं विनिश्चितं नापयानम्। एतावान् कालो व्यतीतः, शकटी कुतः प्रचलिता क्वागता किन्त्वेकत्रावस्थानेऽप्यावयोः परिचयवार्ता तिष्ठत्यकृतपदा। जिज्ञासा नुदति मां भवद्विषये"– इत्यभिधाय मन्मुखासक्तदृष्टिः सा श्रोतृमुद्रां विधाय स्थितवती। एतादृशेष्ववसरेषु सर्वथाऽपरिचितजनसमक्षमात्मानं नैवोद्घाटनीयमिति मनसा विमृश्यार्धसत्यमाश्रित्यावोचम्– "जयपुरवासिनं मां जना वल्लभदास इति कथयन्ति शासनाधिकारिसेवाया निवृत्तोऽहमिदानीं काशीतीर्थात्स्वनगरं गच्छामि।" एतच्छ्रुत्वा कुन्दकलिकास्मितेन सा सुदती प्रोवाच– "अहमपि जयपुरनिवासिनी सुहासिनी। एकस्या औषधिनिर्मातृसंस्थाया विक्रयप्रतिनिधित्वेन नगरान्नगरं भ्रमामि। इदानीं पूर्वभारतनगरेभ्यो जयपुरं प्रस्थितास्मि।" तस्याः सुहासिनीति नाम श्रुत्वा मदीये चित्तपटले एका पञ्चवर्षीया कृष्णा बालिका चित्रिता यस्या जननी मम गृहे सेवाकर्म करोति स्म। प्रायेण विंशतिवर्षपूर्वं सा स्वक्रोडे एतां बालिकामादाय मम गृहकर्मकरणायायाति स्म। तत्र कुट्टिमे शयिता निराकांक्षोदरा सा बालिका सहजचपलतया हस्तपादप्रक्षेपपूर्वकं निर्भरं हसति। तस्या मधुरं हास्यं दर्शं दर्शं मया तदन्वर्थकं नाम सुहासिनीति कृतम्। सा सुहासिनी ममैव प्रांगणे जानुचलनेन शनैश्शनैर्वर्धिता। यदा सा पंचवर्षीयाऽसीत्तदैव तस्या जननी स्वल्पकालसंक्रान्तव्याधिना दिवंगता। अनाथा सा कन्या पोषणवृत्तिपुरस्सरं मया स्वकीयापरभृत्याय प्रदत्ता। एतत्स्मरणान्मे दृष्टिः तस्यां युवत्यां सुहासिनीमन्वेष्टुकामा बभूव। विचारमग्नं मां सा प्रबोधितवती। मया यत्स्मृतं तत्सर्वमुक्तम्। तदातीतवृत्तान्तं निशम्य सा गभीरचिन्तामग्ना संजाता। मया पृष्टे सति सा प्राह– "भवता स्मृता सा सुहासिनी वस्तुतोऽहमेवास्मि। भवानपि मयाऽभिज्ञातः। स्मरामि मातृनिधनम्। तदानीं कालकलाधिरूढायास्तस्याः कातरे नेत्रे मामालक्ष्य कथमश्रूण्यमुञ्चतामिति तद्दृश्यमद्यापि तथैव तिष्ठति। महद्दयया भवान् मां यस्मै प्रायच्छत् स तु

नरकाक एवाधमः प्रमाणितः। भवद्दातव्यधनेन परिपाल्य मद्विवाहवयो वीक्ष्य स राक्षसो मामुद्वाहाडम्बरमिषेण विक्रीतवान्। एवं चिल्लाचञ्चुस्खलिताऽहं बधिकगृहे पतिता। येन मम पाणिर्गृहीतः स हिंस्रलुण्ठकप्रमुखोऽस्ति। अस्मिन् दले मादृशा अनेका युवत्यः परवशास्सूत्रसंचालितपुत्तलिका इवाचरन्ति। एतेषां जालग्रन्थिः समस्ते भारते ग्रथितो वर्तते। एते गन्धघ्राणका निजाखेटं लक्ष्यीकृत्य तदन्वस्मद्विधां योजयन्ति। तैः प्रदत्ता सूचना कदाप्यसत्या न भवति। अतः परं वयं तत्सर्वं साधयामः।'' इत्युक्त्वा सा स्वकटिगुप्तं निस्सार्य चक्रकाग्नेयास्त्रं[1] मां प्रादर्शयत्। तस्या रूपमिदमालोक्य मद्हृत्कम्पनं वर्धितम्। किन्तु स्वस्मितेन मह्यं जीवनदानं प्रयच्छन्ती सा प्रोवाच – ''भवता स्वविषये यत्कथितं तदसत्यम्। किन्तु यात्रायामिदमेवोचितम्। भवान् जयपुरस्थः समधिकश्रीसम्पन्नो रत्नविक्रेता। अत्र भवान् पञ्चलक्षमुद्राः धारयति याः काशीस्थव्यापारिवर्गाद्रत्नविक्रय-मूल्यरूपेण प्राप्ताः। ताः मुद्रा अपहर्तुमेवाहं विनियुक्ता। परन्तु मां प्रेष्य दैवेन भवान् रक्षितः। भवान् मे धर्मपिता। भवद्धनेनैवाहं पोषिता। अतो नायं मे धर्मो यद्भवन्तं विलुण्ठ्य कृतघ्नतामाचरामीत्यभिधाय सा प्रसन्नमुखी संजाता। तस्याः वचनेनानेन मे दूरंगताः प्राणाः प्रत्यावर्तिता इव।''यदा भवती जयपुरं प्राप्स्यति तदा रिक्तहस्तां दृष्ट्वा दलनायकः किं वक्ष्यति ?'' इति मयि पृष्टे साऽनुंद्विग्नमना सहजभावेन प्राह – ''अस्मिन् कर्मणि व्यापृतायार्मे प्रथमोऽवसरोऽसफलतायाः। अतो नाहं तेषामविश्वासभागिनी भविष्यामि। केनाऽपि व्याजेनेदं सर्वं गोप्स्यामि।''

ततश्च रात्रिभोजनान्तरं सा नैकान् साहसिकरोमाञ्चकरान् वञ्चक-कर्मानुभवान् श्रावयामास। सम्प्राप्ते निशीथे जातनिद्रा च सुष्वाप। किन्तु निद्रा तु मामपहाय गतैव। निखिलां रात्रिमहं नेत्रयोरेव व्यतीतवान्।

अपरेद्युः प्राप्ते जयपुरे सुहासिनी यानादवतीर्य मत्पादयोः प्रणम्य यथाभिलषितं स्थानं जगाम। अहमद्यापि तस्या औदार्यं कृतज्ञताभावञ्च स्मरामि।

---

१. रिवाल्वर इति।

कथेयं कल्पिताऽपूर्वा श्रुत्वा घटनं तादृशम् ।
एकदा रेलयानेन स्वगृहं गच्छता मया ॥
सुहासिनीसमा नार्यः लुण्ठयन्त्यनभिज्ञाञ्जनान् ।
नराः कापटिका धूर्ता ह्यस्मिन्कर्मणि व्यापृताः ॥
यात्रां विना न साध्येयं लोके जीवनपद्धतिः ।
अतः सर्वत्र कर्तव्या जनैरनवधानता ॥
कालोऽयं निर्ममो जातः संकटानि पदे-पदे ।
तथैव व्यवहर्त्तव्यं यथा प्राणाः सुरक्षिताः ॥

## ॥ द्विजिह्वः ॥

अहो परमाश्चर्यमयी सृष्टिः रचनाचातुरी च विधातुः यथेदं जगति विलसति विविधवैचित्र्यम्। का कला, कीदृशी कल्पनाप्रतिभा, कीदृशं चातुर्यं यतो हि तैरेव पञ्चमहाभूतैः नानावर्णाकृतिरूपगुणविशिष्टान् जन्तून् व्युत्पादयति विधिः। अपारे जीवसंसारे केवलं यदि मानवमधिकृत्य विचार्यते, तद्रहस्यपटलमुद्घाटयितुं नास्ति कोऽपि समर्थः। अतः परं किमाश्चर्यं यदत्र कश्चिदेकाननोऽपि द्विराननः, एकजिह्वोऽपि द्विजिह्वः स्यात्। एवंविध एको जन्तुः विचित्रो मम ग्रामेऽपि वसति। तद्वृत्तान्तं श्रोतुं भवतां मनांसि यदि पर्युत्सुकानि सन्ति, कर्णं दत्वा शृण्वन्तु।

धन्येयं धरा या जिह्मस्यास्य द्विजिह्वस्य भारं वहति। एष द्विजिह्वः पूर्वजन्मसुकृतेन भव्याकृतिस्सुदर्शनोऽस्ति। वाणी तु तस्य जनानां कर्णेषु मधुधारां वमति। यस्योपरि दृष्टिं निक्षिपति स आत्मानं प्रसादीकृतमिव मन्यते। अपूर्व-सम्मोहकः तस्यानुभावः। स यत्किञ्चिदपि वदति तत्सर्वं सत्यमेव प्रतिभाति। स विषयमेवं प्रस्तौति, वार्ता एवं श्रावयति, स्वचातुर्यमेवं प्रकाशयति, जनाः तन्मुखासक्तदृष्टयो मुग्धास्तं श्रद्दधति। यत्रकुत्रापि यत्कोऽपि विचित्रो वृत्तान्तो श्रूयते तस्मिन्नवश्यमेव द्विजिह्वस्य सहभागित्वं भवति।

द्विजिह्वस्य परमो गुणः स कस्यचिदप्युत्कर्षं न सहते, मैत्रीं नानुददाति, सम्बन्धं नानुमन्यते। परेषां गुणेषु दोषान् पश्यति, सुखे दुःखं मिश्रयति, अमृतं गरलं विदधाति। स रजोराशिभी रज्जुं विनिर्माति, शशशिरसि शृङ्गमाविष्करोति, हिमजलेऽपि ज्वलनं ज्वालयति, अकाण्डेऽपि काण्डं वितनोति। किन्त्वेक एव दोषो द्विजिह्वस्य यदा कोऽपि तस्य प्राणेष्वापतति तदा स स्वकीयां जिह्मतां द्विजिह्वतां विहाय सर्वतोभावेन तं शरणं गच्छत्यपि

च स्वपूर्वकथितमेवं साधु साधयति यद्विनष्टमपि कार्यजातं पुनर्नवोन्मेषं सम्प्राप्य सफलं भवति ।

एकदा द्विजिह्वः कस्मैश्चित्प्रयोजनाय कुत्रचिद्गतवान् । प्रयोजनसिद्धि-साधनभूतोऽभीष्टो जनो बुद्धिकृपण उलूकवाहनश्चासीत् । स्वकार्यसिद्धये द्विजिह्वेन तस्यालीकस्तुतिः समारब्धा । तस्मिन्नेव प्रसङ्गे सोऽपि द्विजिह्वं पृष्टवान् – "भोः, स्वकीयं ग्रामप्रमुखं कथं मन्यसे ?" द्विजिह्वः कपटचातुर्येण विचार्य प्रहसन्निव प्रोवाच – "श्रीमन्! नाहमसत्यं ब्रवीमि । तेन सह भवतः का तुलना ? स वराकः द्वितीयाचन्द्रो भवान् तु पूर्णचन्द्रो विराजते ।" तन्मुखादीदृश-मुपमितं विभाव्य निजगौरवं मन्यमानः स तं कृतार्थमकार्षीत् । परन्तु तत्र कश्चिदिमं संवादं श्रुत्वा द्विजिह्वाचारखिन्नो ग्राममागत्य प्रमुखं सर्वं न्यवेदयत् । तच्छ्रुत्वा कोपाविष्टः प्रमुखो द्विजिह्वमाहूय पप्रच्छ । सोऽपि द्विजिह्वोऽ-विच्छायवदनोऽब्रवीत् – "मान्यवर, अलं क्रोधेन । अहं जानामि, कोऽपि कुटिलाशय आगत्य मत्कथने दोषमुत्पाद्य भवन्तं मद्विरुद्धं कृतवान् । भवतु, मया यत्कथितं तच्छृणोतु । तत्र तेन जनेन भवद्विषये पृष्टे सति मयोक्तम् – "मम ग्रामप्रमुखस्य त्वया सह कीदृशी तुलना ? त्वं पूर्णचन्द्रोऽसि प्रमुखस्तु द्वितीयाचन्द्रः ।" अत्र ममाभिप्राय आसीत् पूर्णचन्द्रतस्तस्य क्षयः प्रारभ्यते किन्तु द्वितीयाचन्द्रस्य भवतोऽतः परं वृद्धिरेवोत्कर्ष एव । मया तु तत्र भवद्गौरवमेव ख्यापितम् ।" ग्रामप्रमुखोऽप्युपश्रुत्य प्रीतः तं प्रति साधुवचनं व्याजहार ।

कदाचिद्द्विजिह्व एकस्मिन् विवादे व्यवहाराधिकारिसमक्षमलीकसाक्ष्यं दातुं ग्रामपुरोहितं नियोजयामास किन्तु पुरोहितेन स सर्वथा निषिद्धः । अतो हि प्रतिशोधविवशो द्विजिह्वो ग्रामजनान् पुरोहितविषयिणीं मिथ्यावार्तां कथयति स्म – " अयं पुरोहितो ग्रामे कथं धर्मशासनं करिष्यति ? अस्य गृहे तु पदे-पदे कुशासनं वर्तते । अयं सदैव सद्वेषः तिष्ठति । ब्राह्मणो भूत्वापि ब्रह्मवित्तापहारी अस्ति ।" कर्णपरम्परया पुरोहितोऽप्येतानि कलुषवचनानि श्रुतवान् । दिवसकतिपयैः

द्विजिह्वो माङ्गलिकं मुहूर्तं प्रष्टुं पुरोहितं प्रत्यगच्छत् । बद्धग्रन्थिः पुरोहितः सोपहासं प्राह – " भो वत्स, अहं सद्वेषोऽस्मि । मम गृहे कुशासनस्य राज्यं वर्तते । अहं ब्रह्मवित्तापहारी भवामि । तत्कथय, ईदृशो दुष्टोऽहं कथं तव मुहूर्तं साधयामि ।" द्विजिह्वः स्वीयं नीचाशयकर्म संस्मृत्याप्यलज्जितो निवेदयामास – "भगवन्! सरस्वतीपुत्रोऽप्येवं वदसि ? केन कुतार्किकेण तव बुद्धिभेदो जनितः ? मया तु भवतां कीर्तिरिव विस्तारिता । किं भवद्गृहे कुशानामासनं न विद्यते ? किं भवान् साधुवेषं न धारयति ? ये ब्रह्मवेत्तारः तेषां साहाय्यं विधाय किं भवान् तापं दुःखं न हरति ?" एवं द्विजिह्वमुखात् श्लिष्टशिष्टाशयं सम्प्रधार्य पुरोहितः प्रशंसापूर्वकं तस्य मुहूर्तं साधयामास ।

विगते ग्रीष्मे द्विजिह्वः सर्वथा नूतनं चमत्कारं चकार । तस्यैव प्रतिवेशिनः कन्याया विवाहार्थं वरयात्रा समागतासीत् । कन्याद्वारे महदुत्सवं वरपक्षे च जनावासे द्वारपूजार्थं वरयात्राप्रस्थानकालिकं प्रमोदं विलोक्य स्वभावप्रेरितो द्विजिह्वः स्वं गोपयन् केनचिन्मार्गेण वासं गत्वा वरपितरं रहसि नीत्वाऽकथयत् – "अयि साधो, किं त्वया कन्या निरीक्षिता ? सा तु कुरूपा विकटानना श्यामास्ति । सद्गृहे लब्धजन्मा सा सोदराऽपि वर्तते ।" एतत्प्रबोध्य द्विजिह्वः ततोऽपससर्प । वरपिता तु साक्षादग्निमूर्तिः भूत्वा फूत्करोति स्म । वरयात्रिणोऽपि विस्मिताः परस्परं मुखमवलोकयामासुः । प्रस्थानकालिको मङ्गलवाद्यध्वनिरपि सहसैव निश्शब्दो बभूव । कथं किमभूदिति साशंकाः कन्याद्वारस्था जना जनावासाभिमुखा द्रवन्ति स्म । तत्र गत्वा वरपितृमुखात्सर्वं विदित्वा, द्विजिह्व एवास्य कारणमिति निश्चित्य, तं प्रगृह्य नीतवन्तः । अयमेव जनः सर्वं सूचितवानिति वरपितोवाच । जनैः पृष्टो द्विजिह्वः सस्मितं प्राह – "मया श्रुतमासीद् वरपिता विद्वद्वरेण्य इति । अतो हि तद्ज्ञानपरीक्षणपूर्वकं मया कन्याविषये यथार्थमेव निवेदितम् । किन्तु सः साहित्यशून्यो मद्वचांसि सामान्यार्थे एव गृहीतवान् । मम कथनमासीत् – कन्या कुरूपा अर्थात् पृथ्वीरूपा परमसहनशीला धीरा सर्वपोषिकास्ति । कन्या विकटानना अर्थात् सुमुखी वर्तते । सा श्यामा अर्थात् दूर्वाकाण्डनिभा

षोडशवर्षीया विराजते। कुलीनगृहे लब्धजन्मा सा सोदरा अर्थात् आहारविषये स्वादुवस्त्वाभिलाषिणी श्रूयते। विचारयन्तु भवन्तः किमशोभनं मया कथितम् ?"
द्विजिह्वस्य स्पष्टीकरणं निशम्य वरपिता सलज्जः क्षमायाचना-पूर्वकं सोल्लासं मंगलवाद्यमिश्रितरवां वरयात्रां समाहूय विवाहोपलक्षित-द्वारपूजार्थं प्रस्थितवानिति ॥

**द्विजिह्वा जन्तवो जिह्मा गुप्तपादाः समन्ततः।**
**दृष्टमात्रेण ज्ञायन्ते बालैरपि स्वभावतः॥१।**
**द्विजिह्वा मानवा भूमौ दृश्यन्ते हि क्वचित्क्वचित्।**
**सहसा नैव ज्ञायन्ते विदग्धैरपि यत्नतः॥२।**
**श्रुत्वा कथां विदित्वा च तत्त्वं प्रभुप्रसादतः।**
**जिह्मा द्विजिह्वा ज्ञायन्ते समाजे नरजन्तवः॥३।**

●

## ॥ वरयात्रा ॥

मन्येऽहं तस्य दुष्टं भाग्यं, निष्फलं जीवितं, विरसोऽनुभवो, येन वरयात्रानन्दो नाधिगतः। स्वविवाहे तु सर्वे वरयात्रां कुर्वन्ति किन्तु ते वृथैव भुवि भारभूता भ्रमन्ति येऽन्येषां वरयात्रासहभागिनो न भवन्ति। नाहं सम्भावयामि तमभाग्यवन्तं यो वरयात्रासुखविरहितः शुष्कस्थाणुरिव सरसोद्यानेऽस्मिन्नपारे सुखसागरसंसारे मूढ इव जडीभूत्वा नोल्लसति। यदि सत्यमेव कश्चिदेवं स्यात् स वरयात्रानुरागिभिर्नूनं पङ्क्तिबहिष्कृतो भवेत्।

या लोकोक्तिः प्रचलति – कण्टकसस्यं लुनीहि वरयात्रां मा कुरु अथवा बुसं वहेद्वरयात्रां न कुर्यादिति कस्यचिदीर्ष्याकलुषितबुद्धिप्रमत्तस्य प्रलाप एव। नात्र सत्यलवोऽपि विद्यते। एवं कथयता केनापि सहजजीवानन्दविद्वेषिणा वरयात्रां प्रति जनेषु मतिभ्रममुत्पादयितुं निरर्थकः प्रयासो विहितः। सत्यं ब्रवीमि, न कोप्यानन्दो वरयात्रानन्दं तुलयितुमलम्। भवन्तु नाम बाला युवानो वृद्धा वाऽकृतवन्तो वरयात्रामवश्यमेव तद्रसास्वादनं कुर्वन्त्वन्यथा मोक्षपदमलब्ध्वा पुनर्जन्मग्रहीतारो भविष्यन्ति। उक्तञ्च –

**"वरयात्रां न कुर्वन्ति ये नरा अत्र भारते।**
**जीवनं यापितं व्यर्थं नास्ति तेषां हि सद्गतिः॥"**

अन्येषां वृत्तं तु नाभिजानामि किन्तु मया नैकधा वरयात्राः कृता एव। अध्ययनकाले सहपाठिनो विवाहे कृतायाः वरयात्रायाः वृत्तान्तं भवन्तमपि श्रावयामि।

वरयात्रानिमन्त्रणं प्राप्य मयैवमनुभूतं यदिन्द्रेण नन्दनकाननविहाराय स्यन्दनः प्रेषितः। वरयात्रानुरूपां वेषसज्जां विधातुं महतोत्साहेन दिनकतिपयपूर्वमेव व्यापृतोऽभवम्। 'अहन्तु वरस्य मित्रम्। सहपाठिनं मां विलोक्य मा

कश्चिदुपहसतु विशेषतो वध्वाः सख्यः। कस्मिन् परिधाने मे काऽभिख्येति सूक्ष्ममवधार्य बहुधा विचार्य वस्त्रचयनमकुर्वम्। मम गलपट्टिका नासीत्। सा तु मया याचिता। निर्धारिततिथौ केशकर्तनं कारयित्वा फेनिलेन स्नानविधिं निर्वर्त्य सुरुचितया वस्त्राणि धारयित्वा मञ्जूषायामन्यानि निधाय सुसज्जवेषो गृहान्निर्गत्यैवं प्राचलज्जनोऽयं यदस्यैवोद्वाहः सम्पत्स्यते। त्रिचक्रिकायान-मारुह्य मित्रगृहं गतवान्। तत्र वरयात्राप्रस्थाने कंश्चिद् विलम्ब आसीत्। मम मित्रं तु गृहाभ्यन्तरे कुलवृद्धैः सह मङ्गलविधिनिर्वर्तनं करोति स्म। अहं द्वार एव परिचितैस्सभाजितोऽन्यैर्वरयात्रिभिः सह उपाविशम्। एकोऽनिर्वचनीयोल्लासः सर्वत्र विराजते स्म; काप्यपूर्वैव शोभा संल्लक्ष्यते स्म। सर्वे यथानिर्दिष्टे कर्मपालने तत्परा आसन्। वरपितुरानन्दामोदनिर्भरा व्यग्रता तु दर्शनीयासीत्। स कदाचिद् गृहाभ्यन्तरं प्रति याति, क्षणादेव बहिर्निर्गत्येतो याति, तत आयाति, सेवकानादिशति, कुटुम्बिनो निर्दिशति, आगतेभ्यः स्वागतं व्याहरति, अतिथीन् पृच्छति, तिष्ठत्युत्तिष्ठति चलति विरमति कस्यचित्कर्णे जपति, कमप्याकारायति च। आसीद्वरयात्रा समयसाध्या दूरगामिनी च। अतो विलम्बो न कार्य इति मनसि कृत्वा मया तत्समीपं गत्वा निवेदितम्–"तात, यात्रा दूरगामिनी वर्तते। अतः प्रस्थाने विलम्बो न कर्तव्यः।" मम प्रस्तावं समर्थयन् सः सर्वान् उच्चैरब्रवीत्–"भोः, त्वरया सर्वं कार्यजातमशेषं कुर्वन्तु। वरयात्रा तत्र समयेन प्रापयितव्या।" एवं निर्दिश्य स गृहाभ्यन्तरं गत्वा वरस्यावशिष्टं मङ्गलविधिं झटिति सम्पादनाय स्त्रीः प्रेरयामास। स्वयमपि धृतपरिधानः प्रस्थानकालिकं मङ्गलवाद्यं वादयितुमादिष्टवान्। अचिरेणैव चलतु, त्वरयतु, अपसर्पतु, गत्वा याने आसनं गृह्णातु, मञ्जूषाः तत्र निधापय, इदं वस्तु आनय, नापितः कुत्र गतः, कर्मकराः तस्मिन् याने तिष्ठन्तु, मार्गं देहिं, तत्र प्रयाहि, वरयात्रा शीघ्रमेव गन्तेत्युल्लसितैः कलकलैः ख्यापितं बभूव। सौभाग्यवतीनां मङ्गलगीति-भिरनुसृतो वरो वरवेषं विधाय मरालगत्या समागत्य बालकैरन्यैः सह सुसज्जिते शोभनवर्णे नवचाकचक्यपूर्णे पुष्पमालाजालैरलङ्कृते कारयाने सुखासीनोऽ-

भवत्। ग्रामाद्बहिरिष्टदेवास्थानपर्यन्तं कुलवध्वो गीतवादित्रपुरस्सरं प्रस्थानं प्रदातुमागतवत्यः। शीघ्रमेव ततो नैकयानाधिरूढा वरयात्रा ग्राममपहाय राजमार्गे वेगेन प्रचलिता। अध्वश्रमापनयनाय यात्राकालविनोदाय च तत्र बसयाने नैके प्रयोगाः प्रादुरभवन्। कश्चिद् गायति स्म, केचन नृत्यन्ति स्म। कश्चित् स्वमुखादेव वाद्यस्वरान् आविष्कृतवान्। केचित् पशुपक्षिणां वाणीमनुकुर्युः। केनापि हास्यप्रसङ्गाः श्राविताः। एवं प्रायेणाशेषे यात्राकाले वरयात्रिणो मनोरञ्जनमकुर्वन्। सामीप्यं भजत्यभीष्टे ग्रामे वाहनानि मन्दिवेगानि राजमार्गादवक्रम्य विषमभूमाववतीर्णानि। ग्रामं यावल्लूनसस्यक्षेत्राण्यतिक्रम्य वरयात्रा प्रापिता। तत्र ग्राममुत्तरेण छायावृक्षोपेते विस्तृते भूखण्डे सकलसौविध्यसज्जितो जनवासः कल्पित आसीत्। वरयात्रिणो यानेभ्योऽवरुह्य तस्थिवांसः। अस्मिन्नवसरे तत्रत्यानां ग्रामबालकानां ग्रामसिंहानाञ्च विचित्रं सम्मेलनं विविधकौतुकक्रीडाकलापप्रदर्शनमवलोकनीयमासीत्।

अथ सिन्दूररक्ताभे व्योममण्डले, प्रतीचीदिगाश्रितरविबिम्बतिलकिते निशामुखे, चित्रभानुपीतभानुचित्रितपीतवर्णवृक्षशिखरे कनकमय इव, नीडं प्रति वेगेनोड्डीयमाने त्वराकुले खगकुले, सुकृतबलेनोपचीयमाने धर्म इवोर्ध्वगतातपेन लम्बायमाने तरुच्छायाविताने, मौनक्षमाशमिते क्रोध इव सन्ध्याप्रभावेण शैत्यमुपनते मन्दायमाने निदाघपवने, दिवसावसाने सरसरसिते मङ्गलवाद्ये, अनुरागरागरञ्जिते जनमानसे, उल्लासमये समये गोधूलिवेलायां कन्यापक्षत आमन्त्रणं समवाप्य वरयात्रिणः समुद्राभिमुखो महानद इव द्वारपूजायै प्रस्थितवन्तः। तदानीं वरयात्रायाः काप्यपूर्वाऽभिख्याऽभिसरति स्म। उत्पतन् श्यामभूधरखण्ड इव मङ्गलमूर्तिः गजराजः पुरस्तादग्रपूजायै धावति स्म। तत्पृष्ठमधिरूढा जना उच्चावचयं नाटयन्तः कथं कथमपि स्वस्थितिरक्षणायैव कृतावधानाः दृश्यन्ते स्म। प्रतूर्णतुरगः कश्चिदश्वारोही वेगेन खमुड्डीयोत्पतितपादप्रक्षेपैरुत्थितैः रजःसम्भारैरनुलिप्तकायो धूसरे जलप्रवाहे प्लवमानो मकर इव प्रतीयते स्म। केचन वृद्धाः शिबिकारूढाः सुखासीनाः पलितकेशाः गलितदन्ता-

ननास्ताम्बूलचर्वणायासकपोलाः सस्मितं पार्श्ववर्तिभिस्सहास्फुटाक्षैरालपयन्तो हास्यविषयतामाप्नुवन्ति स्म। पदयात्रिणस्तु कदाचिन्मरालगत्या कदाचित्काकगत्याध्वलङ्घनं कुर्वाणा अनियतपदक्रमैः सोत्सुका अपि सालसा इव गमनशोभां वर्धयन्ति स्म। अथ सहसैव पश्चाद्वर्तिभिः जनैः पुरोयायिनः प्रति 'विरमन्तु विरमन्तु' इति व्याहृतं निशम्य यावत्परिवर्त्यालोकयन्ति तावत् षोडशशृङ्गारसज्जितां मानिनीनायिकामिव वरवाहिकां कारशकटीं रोषावेशविवशामिव निष्पन्दां पश्यन्ति। चालकस्य दशा त्ववर्णनीयासीत्। स कदाचिद्यन्त्रप्रकोष्ठमुद्घाट्य विलोकयति, कदाचिदितो याति ततः प्रयाति यथाज्ञानं सर्वावयवं परामृशति किन्तु यानक्रमारम्भे सफलतां नाधिगतवान्। अस्मिन्नेव समये शृङ्गारे वीभत्स इव, मधुरे तिक्त इवेयं विकृतिः कथमायातेति विचार्य सर्वे खिन्नमानसाः सञ्जाताः। कन्याद्वारतोऽपि सर्वे सोत्कमना नकुला इव दृष्टिपातं कुर्वन्ति स्म। केचन युवानः तत्रागत्य स्वकीयं वैदग्ध्यं ख्यापयन्तः किं कृतं किं न कृतमिति चालकमपृच्छन्। बहुभिः प्रयासैरपि यानस्य हठशीलता न निराकृता। अन्ततः कथंकथञ्चित्ततत्सङ्घातबलेनाकृष्य द्वारं यावन्नीतवन्तः। एवं वरयात्रा कन्याद्वारं प्रापिता।

कन्याद्वारस्याप्रतिमा शोभा विराजते स्म। सुगन्धिजलसिक्तं द्वारदेशं प्राप्य सर्वेषामध्वखेदोऽपगतः। नारीणां श्रुतिप्रियैः सुमधुरैः गीतैः, सानेयिकास्वरैः नूपुरक्वणितैः वलयशिञ्जितैः मधुस्मितैः साकूतसोत्प्रासहसितैः मृगदृशां कटाक्षविलसितैः सह मिश्रीभूय वरयात्रिणामुल्लासहासः प्रकटितविविधविलासो लब्धविकासोऽभूत्। वरयात्रिषु कश्चित् कङ्कतिकया केशकलापं पुनर्प्रसाधयामास, कश्चनांसस्रंसितं कौशेयदुकूलपटं व्यवस्थापयामास, कश्चिद् वरकेण वक्त्रप्रोञ्छनं कृतवान्, कश्चित्कण्ठादपकृष्य पुष्पमालिकां करे कृत्वा पुनः पुनः जिघ्रति स्म। अक्ष्णा काणः कश्चित् कृतश्यामोपनेत्रसन्धानो दूरादेव नेत्रनिर्वाणसुखमवाप्नोति स्म। पादेन खञ्जः कोऽपि स्वदोषाविष्करणायान्येभ्योऽवसरमदत्वैव झटिति काष्ठासनारूढोऽभवत्। केचन युवानो विपुलसिन्दूरसीमन्तिनीं प्रभूततैलचिक्कण-

केशकलापिनीं बृहदाकारटीकालसितमध्यललाटफलकां सघनप्रसाधनश्वेतरजः-पटलधूसराननां स्थूलकज्जललेखानुलिप्तदग्धवराटकनिभनयनां प्रगाढरञ्जित-मेदुररदनच्छदोपरिविराजमानदीर्घदन्तिकां तरुणीमिवाचरन्तीं काञ्चन ग्रामप्रौढां सुचिरं निर्वर्ण्य परस्परं हासनिर्भराः जायन्ते स्म। अथ जलपानायाहूतास्ते सर्वे वरयात्रिणः तत्र प्रवृत्ताः सुस्वादुमिष्टान्नोपभोगे जलपाने ततश्च ताम्बूलचर्वणे। अहन्तु द्वारपूजास्थले वरमित्रस्य पार्श्ववर्ती भूत्वा नेत्राभ्यां निपीयैतत्सर्वं श्रुतिभ्यां श्रुतितिक्ताम्लमधुराणि ग्रामतरुणीपरिहासवचांसि श्रावं श्रावमपि किञ्चिद् वक्तुकामोऽपि मौनं समाचरामि। एका प्राह – "रे दैव! त्वया किं कृतम् ? मदीयां मृगशाविकां सखीं करिकरे निक्षिप्तवानसि !" अपराऽब्रवीत् – "अये, पश्य-पश्य, वरस्य नासिकां पश्य; विचित्रैव दीर्घा वर्तते।" अन्यापि पर्यालोचयितुं प्रवृत्ता – "वर्णन्तु गौरं वर्तते किन्तु मुखाकृतिः अलाबुकासदृशी प्रतिभाति। आयुरपि किमप्यधिकं प्रतीयते।" एका प्रौढाऽवोचत् – "मुखाकारसदृशो नेत्राकारो न वर्तते। मन्येऽहं विधिना गजाननिर्मितिभ्रान्त्या खल्वेतन्निर्मितम्।" एवंविधान्यन्यान्यपि बहूनि दोषानुगतनर्मवचांसि निशम्य मया सस्मितेन तत्र स्वस्थितिः विहिता। इतश्च द्वारपूजायामुभयपक्षतस्समागतानां पण्डितानां वैदुष्यमतिक्रम्यानुभवसिद्धो नरप्रसिद्धो नापित एव सर्वान् विधीन् कारयामास। पण्डितास्तु दर्दुरध्वनिभङ्ग्या मन्त्रोच्चारणं कुर्वाणा दक्षिणानिर्धारणे एव विवदमाना आसन्। द्वारपूजासमाप्तौ वयमपि जलपानं कृत्वा जनवासं समागतवन्तः। तत्र सुस्थिता वयं यावदन्येषु सुखावहप्रसङ्गेषु रमाम तावदचिरेण विवाहविधिः समारब्धः। वरस्तु विवाहमण्डपं गतवान्, अन्ये सर्वे वरयात्रिणो रात्रिभोजनायाहूतास्तत्र द्वारं गत्वा सुस्वादुभोजनं जलं पायं पायमाकण्ठमशित्वा पूर्णोदरास्तथाप्यतृप्तमना मधुरं गालिगीतं श्रोतुं विलम्बयन्ति स्म। अस्मिन्नवसरे –

**'मधुरैर्गालिगीतैस्सह भोजनं यदवाप्यते।**

**तदाकण्ठमशित्वापि नैव तृप्तिर्हि जायते॥'**

एवं मङ्गलामोदयमयी सोद्वाहरात्रिः कथं क्षणमिव व्यतीतेति नावगच्छामि।

अपरेद्युः प्रातःकाले सम्पन्नसर्वाचारा प्रथितप्रचारा विविधानन्दप्रवारा सकलसुमङ्गलसारा विगतक्लांन्तिविकारा लब्धकीर्तिप्रसारा सम्भृतयौतुकोपायनभारा प्राप्तनववधूपहारा ह्युभयकुलप्रेमाकुलेमङ्गतरङ्गितस्निग्धकूलामृतधारा स्थापितसुमधुर-सम्बन्धरत्नागारा प्रीतिपूर्विकां गमनानुमतिमवाप्य सहजस्नेहग्रथितग्रन्थिदुकूला सम्बन्धिजनसङ्कुला विकसितविनोदविपुला समधिकसमधीसमधीप्रसादा विविधवाहनवाद्यनादा निश्शेषशोभावैभवसम्पन्ना सर्वजनमनःप्रसन्ना वरयात्रा प्रत्यावर्तिता ॥

**लोकस्य विशयं छेत्तुं मोदाय वरयात्रिणाम् ।**
**आनन्दरसनिष्यन्दो वृत्तान्तो ग्रथितो मया ॥**
**वरयात्रा वरं यात्रा शेषा यात्रा निरर्थकाः ।**
**एतदर्थं करोत्येव लोकयात्रां स्वयं प्रभुः ॥**

●

## ॥ महाकविः ॥

प्रावृड्दर्दुराणामिव कवीनामेका सुदीर्घा पङ्क्तिर्विराजत इदानीं मम ग्रामे। साक्षरराक्षसान् हठपाठप्रतिष्ठायुतान् सरस्वतीप्रसादनघर्षणकिणाङ्कमसृणमस्तकानेतान् सर्वान् कवीन् विलोक्योपश्रुत्यानुभूय चेदमेव प्रतीयते यत् पूर्वजन्मसु तेषु कश्चित्कालिदास गृहे सम्मार्जक आसीत्, कोऽपि भारविगृहे भाण्डसेवक आसीत्, कश्चन माघगृहे माषशोधक आसीत्, कोऽपि बाणभवने वस्त्रच्छालक आसीत्, कश्चिद् भवभूतिगृहे भारवाहक आसीत्। अस्मिन् जन्मनि यदा प्रजापतिः शरीराणि विनिर्माय तत्र बुद्धिस्थापनकर्मनिरत आसीत् तदैते कुत्रचिद् विचरणाय गता आसन्। प्रत्यावर्तितानेतान् प्रमादिनः निरीक्ष्य प्रजापतिः भृशं चुकोप शापमुद्रयोवाच च – "गच्छत ताधन्मर्त्यलोकमधस्तात्कविजातिभाग्भूत्वा।" हाहाकृद्भिस्सर्वैः सकरुणं सोऽप्युक्तः – "भगवन्! मर्षयास्माकं प्रथमापराधमिमम्। अतः परं कदापि वयं नैतादृशापराधकारिणो भविष्यामः।" किन्तु प्रजापतिर्मनागपि कर्णं न दत्वा प्रोवाच – "नेदं मे वचनमन्यथा भवितुमर्हति। तथापि यदि युष्मभ्यं रोचते, कस्मिन्नप्येकस्मिन्नेव ग्रामे सर्वेषामुत्पत्तिर्भविष्यति। तत्र बहुकालमुषित्वा सर्पस्य निर्मोक इव देहान् त्यक्त्वा पुनरत्रागमिष्यत।" शोकसंविग्नमानसा पनसा इव कण्टकितदेहास्ते व्यग्रेहाः पुनरप्यपृच्छन् – "भगवन्! कथमस्माकं शापशोकविरतिर्भविष्यति?" एतच्छ्रुत्वा जहास प्रजापतिः प्रोवाच च – "यदा युष्माकं काव्यं कर्णे प्रविश्य कस्यचिच्चित्तमेवं चालयति यत्स त्वामेकाकिनं मञ्चस्थं वा गलितैः फलैः, प्रस्तरमृत्तिकाकर्कशशकलैरुपानद्भिर्वा तत्तुल्यैः प्रहरणादिभिर्गालिदानैः सह सभाजयति तदा शीघ्रमेव शापशोकविरतिं वितरिष्यति दैवः।"

मन्येऽहमेतेषां मर्त्यलोकागमनवार्तामिव कथयितुं गर्दभाः, शृगालाः, कुक्कुराः, काकाः, दर्दुराश्च प्रेषितास्त्र प्रजापतिना। ततश्च प्रजापतिसकाशान्निवर्त्यैते सर्वे

भुवं प्रति प्रस्थिताः नभस्स्थिता एवापश्यन् भारतवर्षे विन्ध्यमण्डले कर्मनाशाया उत्तरे तीरे गण्डस्योपरि स्फोटमिव प्रवृद्धमेकं पर्वतपुरं नाम ग्रामं बदरीवनाच्छादितम्। यत्र वने पुण्डरीककुलं न वने, अग्निमुखाः मत्कुणाः न ब्राह्मणा, विजयिनो व्याधाः न तु क्षत्रिया, अक्षजितो दुर्व्यसनिनो न तु साधवः, अपटी शिविरो न तन्तुवायः, सगण्डकाः पल्वलाः न नराः, गणकाः वृषभाः न तु जनाः, चक्रयुताः कुम्भकाराः वृषभाश्च न तु वनानि, स्थाणुर्वाटिकायां न मन्दिरे, गुणाः धनुषु न जनेषु, स्यन्दश्च सरिति न तु ग्रामे। दृष्ट्वा च तस्य रामणीयकेन हृतहृदयास्ते सर्वे तत्रैव जन्म ग्रहीतुं निश्चितवन्तः। अथ कालान्तरेऽस्मिन् ग्रामे एकस्मिन्नेव दिवसे नैके शिशवः समुत्पन्नाः। शैशवादेव तेषां काव्यप्रतिभा जले तैलमिव लब्धप्रसरा बभूव। काऽपि पशुचारणप्रसङ्गे महिषीपृष्ठमारूढः काव्यं करोति, रजकसुतः कश्चिद् गर्दभमारुह्य कवितां निर्माति, अपरो वृक्षस्कन्धे स्थित्वा कविकर्माभ्यासं करोति, अन्यः क्षेत्रेषु सस्यरक्षणं कुर्वन् काव्यपाठं करोति, एकः तडागेषु मत्स्यबन्धननिरतः काव्यरसे निमग्नः, कश्चिन्नापितपुत्रः जनानां केशकर्तनेन सहैव स्वकाव्यं श्रावयति। एवमगणितैः कविभणितिभणितैरेतद्ग्रामः काव्यमय एवाजायत। पुरा कालिदासगृहे सम्मार्जकोऽस्मिन् जन्मनि ग्रामेऽत्र चारणकुले समुत्पन्नः पश्चात् स्वकाव्यप्रौढिवशान्महाकविरित्यभिख्यां जनैस्समासादितवान्। न केवलं स काव्यमेव करोत्यपितु नित्यव्यवहारेऽपि सदैव छन्दोमयीं वाणीं प्रयुङ्क्ते। वीणाघटनव्यग्रा शारदा तस्य महाकवेः जिह्वाग्रे लुठतीव। संस्कारविशेषात् काव्यकल्लोलिनी नैसर्गिकी प्रतिभा महाकवेश्चिरसङ्गिनी बभूव। काव्यरसनिमग्नो महाकविः शयनोत्थाने भोजने स्नाने गमनागमने न कमपि क्रमं निश्चिनोति। तज्जीवनस्यैकमेव प्रयोजनं काव्यरचनम्। विषयानुरूपं छन्दः स्यान्न वा, रसानुकूला पदावली भवेन्न वा, भाषोचितोऽलङ्कारप्रयोगः क्रियते न वा, केवलं वर्णसंयोजनं कृत्वा, कण्ठबलेन सस्वरं नीत्वा स तस्मै पदसमूहाय काव्योपाधिं ददात्येव।

भवन्तः सहृदयाः यदि मम ग्रामे समागच्छन्तु तदा कथं महाकवेरभिज्ञानं भवेदिति कुतूहलप्रशमनाय तस्यानुभावसङ्केतं ददामि। यदि ग्रामे कोऽपि भवद्भिः

दृश्यते यो नातिलघुर्नातिदीर्घः, भल्लूक इव श्यामवर्णः, मध्ये शुक्तिखलितोऽपि शिरःपार्श्वस्कन्धावलम्बिदीर्घकुटिलकुन्तलः, कूष्माण्डाकारकपालः खर्परखण्ड-चिक्कणभालः, दग्धवराटकचक्षुः, लघुचिपिटनासिकाग्रः, स्थूलौष्ठः, दन्तुरः, बकग्रीवः, सम्पीडितपिटककपोलः, ह्रस्वबाहुः, तुन्दिलोदरः, क्षीणपादः, नरापवादः, शीर्णकञ्चुकः, जीर्णधोवस्त्रः, दीर्णचर्मपादुकः, स्कन्धार्पितप्रसेवः कृकलासगतिको जनः सोऽवश्यमेव महाकविरेव नान्यः। स्वकीयेनानेनानुभावेन स दूरत एव विभाव्यते।

एकदाऽहं प्रयोजनवशादेव महाकवेः गृहं गतवान्। तस्य गृहात्काव्यमयी संवादसरणिः मम श्रोत्रपथमागतवती। किञ्चित् क्षणं निभृतं स्थित्वा मया श्रुतम्। महाकविराह – "प्रियतमे,

**खट्वेयं तव विरहे दीना। पश्य पश्य कीदृशी मलीना॥**

**तव भारं सामोदं सहते। किञ्चिदपि कदापि न व्यथते॥**

**एह्येहि मा कालं यापय। सुखेनोषित्वा बहु संल्लापय॥"**

महानसात्तस्य भार्या तालं दत्तवती –

**"नाहं रिक्ता, कर्मव्यापृता। दशामीदृशीं त्वया प्रापिता॥**

**खण्डयामि खलु बहु वृन्ताकम्। मार्गय कमप्यन्यजल्पाकम्॥**

**नहि ददामि यदि तुभ्यमशनम्। कथं करिष्यसि काव्यविरचनम्॥"**

एतच्छ्रुत्वाऽहं मनस्यकरवम् – 'अहो, अनयोस्संवादपरिपाटी! भार्याऽपि न काचिन्न्यूना। भवतु तावदल्पज्ञा किन्तु कवियित्री त्वस्त्येव। यादृशो महाकविस्ता-दृशी तस्य भार्या।" द्वारि स्थितेन मया कपाटे हस्तो दत्तः। तत्रत एव महाकविः प्राह – "सखे, क्षणं किञ्चित्प्रतिपालय। कस्त्वं जिह्वां निजां प्रचालय॥" विहस्य मयोक्तम् – "कश्चिदकविः द्वारि तिष्ठति।" "आगतोऽहं सखे, आगतोऽहं सखे" इति गायन सत्वरमागत्य मां विलोक्यैवं हर्षामोदनिर्भरो जातो यथा वृष्टि

समासाद्य शुष्कप्रायं शालिवनम्। कण्ठेनाश्लिष्य स्वागतं व्याजहारोवाच च–"इदानीं काव्यश्रोतारः कृच्छ्रेण लभ्याः। यदि कथञ्चिल्लभ्यन्ते, तेषां दशेयं वर्तते यत्–'वादय वीणां महिषसमक्षम्। पश्य तस्य सततं रोमन्थम्॥' त्वं जानास्येव श्रोतारः कवीनामिष्टदेवतुल्याः भवन्ति। अपि च, स्वनिर्मितिः कस्मै स्वयं न रोचते ? स्वकाव्यप्रशंसामवाप्य कविः संसारेऽस्मिन् सर्वमेवाप्नोति। भवान् सहृदयः श्रोता। मयाऽद्यैव 'विरहिणीसप्तकम्' विरचितम्। भवतु, श्रावयामि–

**एका विरहिणी याता स्नानार्थं पुष्करे यदा।**
**तस्याः सन्तापमासाद्य जलं सर्वं नभो गतम्॥१॥**

**हिममण्डितभूभागे यदा विरहिणी गता।**
**हिमराशिः द्रवीभूतो नद्यस्तत्र प्रसुस्रुवुः॥२॥**

**विरहिण्येकदा गत्वा बाष्पयानमुपाश्रिता।**
**अहो! उच्छ्वसितैस्तस्याः यानं स्वैरं प्रधावितम्॥३॥**

**शीतार्तावपि तद्ग्रामे शीतबाधा न बाधते।**
**रहस्यं केनचित् ज्ञातं विरहिण्यो वसन्ति यत्॥४॥**

**आर्द्रमेव परीधानं धारयन्ति सुसेविकाः।**
**विरहिण्यन्तिकं यातुं शीतनक्तमहो! सदा॥५॥**

**विरहिणीसभामध्ये पानार्थं शीतलं जलम्।**
**करस्थं क्वथितं जातं तास्तिष्ठन्ति पिपासिताः॥६॥**

**इन्धनानि न मृग्यन्ते नागरैश्चिरकालतः।**
**विरहिण्यधितापेन भोजनं पच्यते यतः॥७॥**

सप्तकं श्रुत्वा शिरश्चालनपूर्वकं बहुधा प्रशंस्य स्वकीयागमनप्रयोजनं मया निवेदितम्–"महाकवे! परश्वो ग्रामे परिवारकल्याणविभागाधिकारिणः

प्रचारगोष्ठीमेकां समायोजयिष्यन्ति। तत्र सायन्तने परिवारनियोजनमिति विषयमधिकृत्यैका काव्यगोष्ठी भविष्यति। स्थानीयाः बाह्याश्चानेके कवयस्तां सभाजयिष्यन्ति। भवन्तं प्रार्थयामि तदाध्यक्षतां निर्वोढुमिति।'' ममामन्त्रणमधिगम्य जलभस्रिकेव महाकविः प्रफुल्लो जातः। अथ कविगोष्ठीं सभाजयन्नध्यक्षपदमलङ्कारकः कविविचारकः स्वप्रतिभाप्रचारकः शारदातारकः सुकविमारको भाषाभारको महाकविविरुदधारकः स काव्यमयमध्यक्षीयभाषणं चकार–

**सखे! नियोजय स्वं परिवारम्। मा वर्धय तृणमपि भूभारम्॥**
**सुखं समृद्धिं यदि त्वं वाञ्छसि। दुःखं दैन्यं यदि त्वं नेच्छसि॥**
**स्वकं कुटुम्बं मा सन्तापय। रूढिं त्यक्त्वाऽऽदर्शं स्थापय॥**
**पश्य रावणं पश्य कौरवम्। नष्टं कुलं हि हीनगौरवम्॥**
**यदि सन्ततिसंख्या स्यान्न्यूना। सम्पत्तिष्ठेत्सदाऽलूना॥**
**जनसंख्याभारेण भारतम्। दूनं हि गच्छत्यनारतम्॥**
**अल्पसाधनः सन्ततिबहुलः। नूनं स्याद्दैन्यदुःखविपुलः॥**
**जनसंख्यामपकर्षय मर्षय। राष्ट्रं निजं सखे! संवर्धय॥**
**यदि सफलं परिवारनियोजनम्। गृहं च वस्त्रं चापि भोजनम्॥**
**सुलभं भवेदिदं खलु धारय। सुखदं व्रतमेतत्परिपालय॥**

करपुटवादनैस्सर्वैरिदं काव्यमयं भाषणं सोल्लासं समर्थितम्। महाकविरपि प्रीतो जातः।

अपरेद्युः प्रातःकाले महाकविः कुतोऽप्यागच्छन् खिन्नमना एव मया संल्लक्षितः। पृष्टे सति स सकरुणमुवाच–''किं कथयामि! कीदृशाः धूर्ताः मिथ्यावादिनः सन्ति संसारे! ह्यः काव्यगोष्ठ्या अनन्तरं ग्रामश्रेष्ठी मामाकार्य साधुवादपुरस्सरमब्रवीत्–'महाकवे! भवतः काव्येन भृशं प्रीतोऽस्मि। इदानीं द्रव्यं नास्ति। श्वः प्रातरेव मम गृहमागच्छतु, भवते पारितोषिकं दास्यामि।'

अथेदानीं तस्य प्रतिज्ञातं संस्मृत्य तमुपयाचितुं गत आसम्। स क्रूरवञ्चको ब्रवीति– 'महाकवे! कविस्त्वं नासि व्यवहारनिपुणः। त्वया वचनैः मयि प्रीतिरुत्पादिता, मयाऽपि वचनैस्त्वं प्रसादितः। क्वेदानीमवशिष्यते आदानं प्रदानं वा? तत्तु ह्यरेव सर्वमवसितम्।'' स्वहास्यं निरुध्य मया स समाश्वासितः– ''महाकवे! धूर्तं तं वणिजं न जानासि परमकृपणम्? मक्षिकाचोषकः स कदापि किमपि कस्मैश्चिद्ददाति? त्वया तस्य परिहासः नालक्षितः।'' महाकविः तमधिक्षिपन् स्वगृहं गतवान्।

अथ कदापि कालान्तरे महाकविमनुधावन्तमन्यं कविमवलोक्य यावत्कुतूहलेन पृच्छामि तावदनिरुद्धगतिकः स सोच्छ्वासं, ''मया महाकवेः दीर्घं काव्यं धैर्येण श्रुतं प्रशंसितञ्च किन्तु स मदीयं काव्यमश्रुत्वैव सहसा पलायितः। तदहं स्वकीयं काव्यं तं श्रावयितुमनुसरामीति'' संसूच्य सोऽपि वेगेनोत्प्लुत्य गतवान्। महाकविस्तु ग्रीवाभङ्गेन पश्चाद्दर्शं दर्शं वातहरिण इव खमुत्पत्य प्रधावति स्म। मया सुचिरं सकौतुकं दृश्यमिदं निरूपितं यावत्तौ दूराद्दूरं प्रणष्टौ॥

## ॥ वैद्यराजः ॥

अस्त्येको ग्रामो विन्ध्यारण्ये नात्युन्नतपर्वतप्रान्तक्रोडेऽवस्थितः। तत्तु तादृश एव यादृशग्रामविषये पण्डिताः निरर्गलं वदन्ति – "चेद्वाञ्छसि मूर्खत्वं वस ग्रामे दिनत्रयम्।" किन्त्वतिविशिष्टोऽयं ग्रामो यस्मिन् प्रवेशमात्रेण मूर्खत्वं समायाति का कथा दिनत्रयनिवासस्य ? पश्यत्वस्य ग्रामपतेः देवानां प्रियत्वम्। श्रूयते, एकदा कोऽप्यश्वसनाथः पुरुषोऽस्मिन् ग्रामे समागतः। तमश्वं दृष्ट्वा ग्रामपतिरुवाच – "कोऽयं पशुः ?" तेनोक्तमश्व इति। ग्रामणीः पुनरपृच्छत् – "अत्र को विशेषः ?" सोऽब्रवीत् – "सुपुष्टोऽयं पशुपुङ्गवोऽश्वो वेगेन धावति। एनमारुह्य कोऽपि कियद्दूरमपि स्वल्पीयसैव कालेन गन्तुं शक्नोति।" निशम्यैतद्वचनं सस्पृहो ग्रामणीस्तं पुरुषमपृच्छत् – "दास्यसि ? मह्यं भृशं रोचते। क्रेतुमिच्छामि।" स पुरुषस्तस्य मूर्खत्वमभिलक्ष्य लोभात्प्रोवाच – "भवान् ग्रामपतिः। अहन्तु सामान्यो जनः। यदि किञ्चिद्ब्रवीमि तत्तु स्वल्पमुखेनानल्पवचनं स्यात्। सत्यं यदि भवते रोचते, एवमेव दास्यामि। किन्तु यदि भवान् क्रेतुं वाञ्छति, पूर्णोचितं मूल्यं देयं भविष्यति। नाहं मन्ये भवान् महर्घमिममश्वं क्रेतुं क्षमोऽस्ति।" कर्णप्रविष्टैरेभिश्शब्दैः रोषावेशविवशो ग्रामपतिः प्रोच्चैर्जगाद – "नाहं दरिद्रः। सञ्चितानि द्रव्याणि, भाण्डान्याभूषणानि वस्त्राणि धान्यान्यपि प्रदायाश्वं ग्रहीष्यामि। साम्प्रतं मूल्यवचनमसाम्प्रतम्।" प्रतिष्ठापणारूढेति विचार्य स्वकीयं सर्वं गृहान्निस्सार्य तदग्रेऽकरोत्। सोऽपि धूर्तः तत्सर्वमादाय भणितवान् – "एतत्तु मूल्यस्य त्रिचतुर्थांशमेव। अवशिष्टमूल्यमादाय पादमेकमश्वस्य निकृत्य त्रिपादोऽश्वो भवते ददामीत्युक्त्वा यावत्खड्गमाकृष्य प्रहरति तावद्ग्रामणीस्तन्निरुद्ध्य मूल्यस्यावशिष्टांशाय तमश्वमपि प्रदत्तधनवस्तुभिः सहैव तस्मै प्राददात्। अविदितनामग्रामाद्यभिज्ञानयुतः प्रहृष्टः सोऽपि धनेन

सहाश्वमप्यादाय पुनः यथाभिमतं जगाम। बुद्धिबलेन मयाऽश्वस्य पादरक्षणं कृतमिति ग्रामजनानाख्याय ग्रामपतिः सर्वेषां स्तुतिवादान् लेभे। ग्रामपतेरिमं बुद्धिविलासमुपश्रुत्य को न तस्य ग्रामस्य बुद्धिवैभवं ज्ञातुं शक्नोति ? तस्मिन्नेव ग्रामे एको वैद्यः प्रतिवसति। निरस्तपादपे देशे एरण्डोऽपि द्रुमायते। स वैद्य आत्मानं बहु मन्यते। वैद्यराजोऽहं भिषग्वरोऽहमिति धन्वन्तरिसुत इव स्वकं ख्यापयन् बहुधा प्रलपति यतो हि तत्र बहुषु ग्रामेषु स एक एव वैद्यः। दूरादप्यातुराः तमन्विष्यन्तः प्रतिदिनमेवागच्छन्ति। सोऽपि रुग्णान् नीरोगान् कर्तुं ग्रामाद्ग्रामं पर्यटति। तस्यैक एवानुजो भ्राता सहायकः कदाचित्तेन सह गच्छति कदाचिद् गृहे एव स्थित्वा तस्य वचनं परिपालयति, व्याधिव्यस्तानामागतानामुपचारं करोति। इयमायुर्विद्या तस्य कुलक्रमागतेति ज्ञायते तस्य मलिनतरे पुटबन्धे यत्नेन स्थापितेनैकेन हस्तलिखितेन शीर्णेन वैद्यकग्रन्थेन यं स कस्मिंश्चिदपि रोगातुरे आगते सत्युद्घाट्यावलोकयति बारम्बारं करेण शिरः परामृश्यौषधिनिर्णयं करोति। यः कश्चिद् व्याधिर्विकारो वा भवेत्तस्य परीक्षणप्रकारः सर्वथा समान एव भवति। प्रथमं तु नाडीपरीक्षणमतः परमुदरपरीक्षणं ततश्च नेत्रमुखजिह्वानासिकापरीक्षणम्। अन्ते च, हृदयस्पन्दनपरीक्षणमवश्यमेव करोति। अस्मिन् परीक्षणविधौ न कोऽपि भेदः स्त्रीपुरुषयोः। नैकेष्ववसरेषु हृदयस्पन्दनज्ञानाय स्त्रीणां वक्षःस्थले हस्तस्थापनप्रसङ्गेऽयं तपस्वी भिषग्राट् ताभिः भृशं ताडितोऽपि स्वकीयमिमं परीक्षणप्रकारं नैव विजहाति। सहायकोऽनुजः स्त्रीणां परीक्षणार्थमनेन सह विवदते किन्तु वैद्यव्यंसकोऽयं तस्मै नावसरं ददाति। अपितु यदा काप्यातुराऽऽगच्छति तदा स्वानुजमन्येषु कार्येषु नियोजयति प्रेषयति वाऽन्यत्र केनचिद् व्याजेन।

वैद्यराजोऽयं ज्योतिर्विद् शकुनविद्यावेत्ताप्यस्ति। रोगिणां हस्तरेखाः भालरेखाश्चापि निरीक्षते। आगमनस्य कालं रीतिमन्यानि च बहूनि लक्षणानि, सहागतानां वार्ताहराणाञ्च वेषादिकं निरीक्ष्य प्रश्नकर्तॄणां मुद्रादिकमभिलक्ष्य, मासदिवसनक्षत्रनामराशीनां गणनां विधाय निश्चिनोति रोगापनयनं भविष्यति

न वेति। सः स्पष्टं कथयति रोगी स्वस्थः स्वस्थो वा स्यात्। यदि कुत्रचिदुपचारार्थं गच्छति, शुभाशुभं विचार्यैव गृहात्पदं धत्ते। एकदा गृहान्निष्क्रमणेन सममेव समक्षमापतन्तं महिषं विलोक्य तेन गमनाद्विरम्य कथितम् – "नेदानीं मम गमनस्य किमपि प्रयोजनम्। रोगी नास्ति लोकेऽस्मिन्।" यदि कोऽप्यातुरवार्ताहरोऽनावृतशिरस्तमुपगच्छति, स दूरत एव तं प्रणम्य प्रत्यावर्तनाय समादिशति यतो ह्यशुभमिदं लक्षणम्। प्रायेण तस्यैतादृशाः फलादेशाः काकतालीयन्यायमनुसरन्ति। परन्तु तस्य स्वकीये विषये एव कीदृशी विडम्बना! साक्षादशुभदर्शनः!! पादेन खञ्जः खर्वः सोऽक्ष्णा काणोऽपि वर्तते। तस्य चिक्कणे शुक्तिखलिते स्खलति सर्वेषामेव दृष्टिप्रसरः। चिपिटनासिकास्थूलौष्ठयोर्मध्ये स्थितं कूर्चाकारसदृशं सितासितं श्मश्रु वचनविन्यासेनैव रोगापनयनाय विधिप्रदत्ता मार्जनीकूर्चिकेव प्रतिभाति। स्थूलस्थूलैः रुद्राक्षैरारचिताभिः मालाभिः परिवेष्टिता तस्य ग्रीवा तदोषधिप्रयोगमृतानां नराणां कपालमुण्डमण्डलेन निगडितेव प्रतीयते। वदनन्तु साक्षात्कूष्माण्डसदनमिवाभाति। कस्यचिन्मन्दशंसितं स कर्णं हस्तेनाच्छाद्य शृणोति। ताम्बूलचर्वणावशिष्टान् रदनविवरविनिविष्टान् कणान् स निरन्तरमिपीकया निस्सारयति। शिरोवेष्टनं विधाय, भाले रक्तललाटिकां विरच्य, ताम्बूलरागच्छुरितं शबलं कञ्चुकं परिधाय आजानुलम्बिनीं दुकूलपट्टिकां स्कन्धदेशे निवेश्य, वामहस्तेन तैलपानमेचकितलघुयष्टिकामपरेण करेण कर्पटभैषज्यमञ्जूषां समादाय यदा स उच्चावचयगतिं नाटयन् प्रचलति तदा दूरतः तरङ्गेषु प्लवमानाऽलाबुकेव परिज्ञायते। अस्य पदभङ्गस्यैका कथा वर्तते। स कस्यचिन्नवरात्रस्याष्टम्यां तिथौ निशीथे देवीं प्रसादनार्थं चाण्डिकायतनं गत आसीत्। रक्तचन्दनपङ्केन देहावलेपं कृत्वा रक्ताम्बरं धारयित्वा सर्वैः पूजोपचारैः देवीं चण्डिकां समाराध्य यदा स चण्डिकायतनाद् बहिर्निर्गत्य ग्राममार्गे आसीत् तदैव कुतोऽप्यागत्यैको वृषभो हुङ्कृत्यैनं तीक्ष्णविषाणाभ्यां समुत्थाप्य कन्दुक इवोच्चैर्निक्षिप्तवान्। प्रस्तरखण्डसमाकीर्णे स्थण्डिले निपतितस्य शरीरं महताघातेनैतादृशं विकृतमासीद्यत्तमवलोक्य कोऽपि जीवित-

विषये न विश्वसिति स्म। तस्य घोरं चीत्कारं निशम्य ग्रामवासिनो धावं-धावं तत्र गत्वा शून्यसंज्ञं तमानीतवन्तः। शय्यागतो मासाधिकं कालं व्यतीत्य यदा स निरन्तरोपचारैर्विगतपीडोऽभवत्तदा यष्टिमवलम्ब्य कथञ्चिच्चलनाभ्यासमकरोत्। शनैश्शनैस्तेन पूर्वावस्थाऽधिगता किन्त्वैकः पादोऽस्थिविकृत एवाभवत्। जनाः दूरत एव तमभिज्ञायानतशिंरसा प्रणमन्ति। बालका अविदितगौरवास्तं विलोक्य हसन्ति। ग्रामसिंहास्तच्छायामप्याघ्राय बुक्कन्ति। यद्यपि ग्रामे भूतप्रेतबाधाहरमेकं कुहकं विहाय न कश्चित्तस्य शत्रुः तथापि स प्राचीं संसूच्य प्रतीचीं गच्छति, तक्रमपि फूत्कृत्य फूत्कृत्य पिवति।

एकदा वैद्यराजः स्वानुजेन सहैकं जीर्णरुग्णं द्रष्टुमन्यग्रामं जगाम। तत्र रोगिणं सम्परीक्ष्य गम्भीराकृतिर्भूत्वा परिचारकानुवाच—"भवन्तः सावधानतया न सेवन्ते। रुग्णायाहारादिकं पथ्यापथ्यविवेकेन देयं भवति। कथं तेन यथेच्छं भुक्तम्? अनेनौषधिसाफल्यं कथं भविष्यति? पश्यन्तु, नाडीगतिरस्य ख्यापयति यत्तेन कदलीफलानि भुक्तानि।" पुनश्च रुजाक्रान्तं सम्बोध्य प्रकटितमन्युरुवाच— "अलं जिह्वालौल्येन। यदि सत्यं भवता स्वास्थ्यं काम्यते, तर्हि यथाऽहं ब्रवीमि तथैव व्यवहर्तव्यम्। अन्यथा चेदिश्वर एव जानातु।" सोऽपि वैद्यस्य पादयोः प्रणिपत्य सकरुणमार्त्तं चक्रन्द। स्वीचकार च कदलीफलभक्षणं रात्रौ सुप्ते सति परिजने। एवं परिवारजनैः भूरिशः सुपूजितः स वैद्यः उपचारविधिं सविस्तर-माख्यायौषधिञ्च प्रदाय प्रचलितः। मार्गे सोत्कण्ठेनानुजेन पृष्टो विहस्याब्रवीत्— "रे मूर्ख! चिरकालार्जितोऽनुभवः कदा प्रयोज्यो भविष्यति? शास्त्रेण सह लोकमपि जानीयात्! रोगिणः कक्षे प्रविष्टेन मया प्रथमे दृष्टिनिक्षेप एव ज्ञातं तत्कदलीफलभक्षणं यतो हि फवत्वचः तल्पाधस्ताद् विकीर्णा आसन्। अतो मया तथा कथितम्।" एवं संल्लपन्तौ तौ यावत्किञ्चिद्दूरमागच्छतः तावन्नदीतीरे प्रज्ज्वलितां चितामवलोक्य सहसैव साश्चर्यमुच्चैर्प्रलपतः—

**"दिवङ्गतः कथं कोऽयं, किं वैचित्र्यमिदं विधेः!**
**नाहं गतो न मे भ्राता, कस्येदं हस्तकौशलम्?" ॥१॥**

वैद्यराजमालक्ष्य तत्र जनसम्मर्दात्कोऽपि दीर्घमुष्णञ्च निःश्वस्य प्रोवाच –

**"वैद्यराज, नमस्तुभ्यं यमराजसहोदर!।**

**यमस्तु हरति प्राणान् वैद्यः प्राणान्धनानि च"॥२॥**

अतः मार्गादवक्रम्याऽग्रेसरौ त्वरितपादौ तौ कश्चित्पृष्ठतः, "भो वैद्यराज! क्षणं विरम्य श्रूयताम्। अयमहमागतोऽस्मी"त्युक्त्वा बाधितगत्या शनैश्शनैरागत्य, स्थितयोस्तयोस्समीपमेवास्थाय व्यथितेन स्वरेणोवाच – "अहो, मृतं चर्म जीवितं चर्म भक्षयति। पश्यतु दष्टं पादयुगलमुपानद्भ्याम्। व्रणविरोपणाय कञ्चिदुपाय-मोषधिं वा दिशतु।" सोऽपि वैद्यराजः तत्क्षणं पुटबन्धान्निसार्य जीर्णग्रन्थमुद्-घाट्यावलोकयामास। किञ्चित्कालानन्तरं बहुधा विमृश्य तेनोक्तम् – "भद्र! नाहं ते ओषधिं पश्यामि। अत्र पशुपक्षिसरीसृपकृमिदंशव्रणानामोषधिर्लिखिता वर्तते किन्तूपानद्दंशगतस्य व्रणस्य काचिदोषधिर्नैव समादिष्टा। अतः किं करवामीति।" सोऽपि खिन्नमना यथागतस्तथैवोत्थाय प्रचलितः।

अथैकदा कस्मादपि ग्रामात् केनापि रुग्णेन प्रेषितो दूत आगत्य वैद्यराजमाकारितवान्। तस्मिन् समये स नासीत्। तस्यानुज एव गृहान्निर्गत्य मनसि – अहमेव गत्वा द्रक्ष्यामीति सम्प्रधार्य तेन सह गतवान्। गत्वा च तत्र संस्मृत्य संस्मृत्य व्याधिपरीक्षणं कृतबान्। पुनश्च कक्षे इतस्ततो दृष्टिनिक्षेपं कुर्वन् सहसैव प्रोवाच – " अनर्थमूलोऽयं व्याधिः। यतो हि रुजाक्रान्तेन नूनमेवाऽश्वो व्यापाद्य भक्षितः। मरणमेव शरणं नास्ति काचिदोषधिरस्य व्याधेः।" कीदृशोऽयं वैद्यः किं प्रलपतीति सर्वैः स पृष्टः – "कथमेवं ब्रवीषि ?" तेन चक्षुषी नर्तयता प्रोक्तम् – "अश्वस्य सर्वमलङ्करणं, पर्याणं, रश्मयो, लालिका खलीनादिकानि वस्तून्यत्र दृश्यन्ते, ततश्चाश्वः कुत्र गतः। नूनमनेन भक्षितः। अतोऽयं व्याधिः।" सर्वैरुक्तम् – "धिङ् मूर्ख! नासि वैद्यस्त्वं किमपि न जानासि। अतः पलायस्व, शिरोभञ्जनं मा कारये"त्यर्धचन्द्रं दत्वा बहिष्कृतः। सोऽपि विच्छायवदनो यावद् गृहं प्रति याति तावद् वैद्यराजमापतन्तमासाद्य सर्वमात्मोदन्तं विज्ञापयामास। अनुभवशून्यं स्वानुजं समाश्वास्य वैद्यराजस्तत्र गत्वा रुजाक्रान्तं निरीक्ष्य सम्यगोषधिप्रदानेन सर्वान् परितोषयामास।

एवमतिक्रामत्सु दिवसेषु कदाचिद् वैद्यराजस्य तस्मिन् ग्रामे निवसता भूतप्रेतबाधाहरेण कुहकेन सह विवादः सञ्जातः। तयोरहिनकुलवच्छत्रुतां तु सर्वे ग्रामवासिनो जानन्ति। कियत्कालात्पूर्वं कुहकस्य मन्त्रवलेनाप्यलब्धस्वास्थ्यः कोऽपि वैद्यराजशरणं गत्वा स्वस्थः सुपुष्टश्चाभवत्। ततश्चेयं शत्रुता प्रगाढतरा बभूवेर्ष्याकषायिता। किन्तु तस्मिन् दिने दुर्दैवेन तौ कुत्रचिद्गमनकाले समक्षं मिलितौ परस्परं कलहायमानौ संस्थितौ। कुहकेन प्रोक्तम्–"पश्यामि तव सामर्थ्यम्। ममोदरे घातं करोषि ?" स्वयष्टिकां नर्तयता वैद्यराजेनाप्युक्तम्–"इदं वैरं ते महर्घं भविष्यति। त्वन्तु न केवलं ममोदरे घातं करोष्यपित्वीर्ष्यया मद्विषये दुष्प्रचारमपि वितनोसि। गच्छ, त्वामहमपि पश्यामि।" केनापि कलहवार्तां ज्ञात्वा ग्रामपतिरागत्य यथातथमकरोत्। श्रूयते, तद्दिनादेव कुहकस्तु तल्पङ्गतो वैद्यराजोऽपि विक्षिप्तो भूत्वा भ्रमति॥

**पृथिव्यां यदि जीवन्ति केचिन्मानवजन्तवः।**

**वैद्यराजेन नाडी तु तेषां नैव परीक्षिता॥३।**

**धन्याः सन्ति गृहस्थास्ते यैस्तु वैद्यो न पूजितः।**

**तेषां गण्ठे धनं सर्वं कण्ठे प्राणाः सुरक्षिताः॥४।**

**वैद्यराजकथा सेयं यथा पूर्वं मया श्रुता।**

**तथैवात्र समाख्याता कर्णातिथ्यं समाप्नुयात्॥५।**

**चरितं वैद्यराजस्य नित्यं पठति यो नरः।**

**सर्वरोगविनिर्मुक्तश्चिरं जीवति सान्वयः॥६।**

# ॥ अतिथिः ॥

अतिथीनां नास्ति कोऽप्यागमननियमः। उल्कापात इव कश्चिदतिथिः कदाऽऽपतिष्यतीति प्रजापतेरपि ज्ञानस्याविषयः। एकदा प्रातःकाले मम विश्वविद्यालयगमनवेलायां द्वारस्था विद्युद्घण्टिका व्यथितेव कस्याप्यङ्गुलिका-स्पर्शेण भृशमुच्चैराक्रन्द्य विरतशब्दाऽभवत्। सहजजिज्ञासावशाद्द्वारदेशं गत्वा पश्यामि दूर्वादलश्यामकलेवरमिषत्तुन्दिलं शुक्तिखलितं पलितश्मश्रुकेशं नातिह्रस्वं नापि दीर्घं प्रायेण पञ्चाशतवर्षदेशीयं पुरुषमेकमदृष्टपूर्वं धौताऽधोवस्त्रकोण-मेकेन करेण विधृतमपरेण च लघुमञ्जूषाम्। नाहमेनमभिजानामीति मनसि कृत्वा यावत्तं जनं विस्फारितनेत्राभ्यां नखादारभ्य शीर्षपर्यन्तं पुनःपुनरवलोक-यामि तावत्स पुरुषः प्रष्टुमना मुखं विवृत्यान्तस्समाकृष्टप्राणवायुर्महता यत्नेन कृतोच्चारणसमारम्भोऽवादीत् – "अस्ति श्रीकमलकुमारमिश्रस्य गृहमिदम् ?" एतावन्मात्रं पृष्ट्वा मन्मुखासक्तदृष्टिः तूष्णीको जातः। मयोक्तम् – "अस्त्येवम्। को भवान् ? कथं तं पृच्छति ? कुत आगच्छति ?" मदीयोत्तरेण तस्याननं तथैव प्रसन्नं जातं यथा वृष्टिमवाप्य शुष्कप्रायो व्रीहिकेदारः। झटित्येव कञ्चुकपुटान्निः-सार्य पत्रमेकं मम करेऽकरोत्। पत्रमुद्घाट्याप्युपनेत्रं विना कथं वाचयामीति तदानेतुं यावद् गृहे प्रविशामि तावत्सोऽप्यतिथिकक्षे प्रविश्य दीर्घं निःश्वस्य मामपृष्ट्वैव शोभासने समासीनोऽभवत्। कोऽयं य ईदृशं प्रगल्भमाचरतीत्यु-पजाताधिकतरकुतूहलेन मयोपनेत्रमानीय तत्पत्रवाचनं कृतम् –

"स्वस्ति श्रीपत्रिकेयं लिखिता वर्धमानपुरतो वयोवृद्धेन पितृव्येन माधव-मिश्रेण। अत्र शं तत्रास्तु। पत्रधारकोऽयं ममाभिन्नं मित्रम्। दैवदुर्विपाकेनास्योपरि वज्रमिव विपत्तिर्निपतिता। अष्टादशवर्षदेशीयोऽस्यैकमात्रपुत्रः सहसैव महाकालेन कवलितः। दुर्भरां विपत्तिमिमां सोढुमशक्तोऽयं शैय्यां गतवान्। कालप्रभावेण शनैश्शनैः कृतोपचारः पुनरपि संज्ञां लब्धवान्। व्यतीतेऽपि बहुकाले सोऽयं

छिन्नवंशमूलः तमेकपुत्रं स्मारं-स्मारं विकलीभवति। इदानीमस्य प्रवृत्तिरध्यात्म-मुखी सञ्जाता। भूतं विस्मर्तुं भविष्यं निर्मातुमेष तीर्थात्तीर्थं पर्यटति। एकदाऽनेन काशीं गन्तुं स्वीयेच्छा मां सूचिता। काशीपुर्याः नामग्रहणेनैव मया त्वं स्मृतोऽसि। न जाने त्वं मां स्मरसि न वा। किन्त्वहं त्वां बहुधा स्मरामि। वार्धक्येऽपि गार्हस्थ्यसम्भारपीडितो गृहं विहाय कुत्रचिदपि गन्तुं न शक्नोमि। काशीं गच्छतानेनेमां पत्रिकां प्रेषयामि। अयं काश्यां दिनकतिपयं व्यतीत्य तीर्थपुण्यं लब्ध्वा मनःशान्तिं विधाय पुनरेष्यति। तव पिता यावज्जीवनमनेन कृतं महदुपकारं मूर्ध्नि निर्व्यूढवान्। अतस्त्वमप्यस्यातिथिसपर्यया सभाजनं कुर्याः। एतदस्य पुत्रशोकविनोदायालं भविष्यतीति शम्।"

पत्रवाचनं परिसमाप्य लेखाशयं विमृश्य वदनाकारं प्रसन्नं विधाय मयाऽतिथिसमक्षमेवं प्रदर्शितं यत्तस्यागमनेन गृहं मे धन्यतां नीतम्। पितृव्यकृपया तत्तुल्यस्वजनसेवावसरो दैवयोगेन सम्प्राप्तः। प्रकटतया मयैवमुक्तम्–"अत्रागत्य भवतोत्तमं विहितम्। अवधारयत्वेतदपि स्वकीयमेव गृहम्। ससुखं वसतु, गङ्गास्नानेन, विश्वनाथादिदेवदर्शनैः पुण्यार्जनं करोतु, यथा ते रोचते। स्वकीयः पुत्र एव मन्तव्यो भवतैष जनः।" मयाऽत्र पुत्रशब्दोच्चारणेन सममेव स निश्शब्दं रोदितुमारेभे। अन्तर्निहिता घनीभूता पीडा पुत्रशोकस्मरण-सन्तापेन द्रवीभूतेन नेत्रकोणाभ्यां निर्गत्य स्थूलमुक्ताफलनिभा अश्रुबिन्दवः कपोलस्खलिताः निपत्य वस्त्रमार्द्रीकुर्वन्ति स्म। व्यसनोपनिपातानां दुर्निवारतामनु-चिन्त्य मया स एवं समाश्वासितः– "अलं रुदितेन। दुर्वारा हि दैवस्य वामा वृत्तिः। क्रूरव्याध इवानायासं कं कदा प्रहरिष्यतीति कोऽपि न जानाति। अविरतनयनजलसिच्यमान वृक्ष इव विपल्लवः सहस्रधा प्ररोहति। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमिति सञ्चिन्त्य पूर्वजन्मनि कृतस्य कस्यचित्पापस्य फलमिदमित्यवधारणीयम्। वैक्लव्यमपहाय धैर्यमवलम्ब्य जीवनं धारय। कर्मणां गतिरीदृशी भवत्येव। एवं बहुधा प्रबोधितः कथं कथमपि समाश्वस्तः प्रमृज्य रक्तकषायितोदरे लोचने, स प्रोवाच–"सत्यं कथयसि। किन्तु कथनं सुकरं करणं दुष्करम्। बारम्बारं मनः समाधातुं प्रयते तत्तु नैव समाश्वसिति। दैवं

कथमेवं विदधाति ? अन्यकृतस्य कर्मणः फलं कथमन्यजनाय ददाति । कस्मैश्चित् किमपि दत्त्वा कथं पुनरपहरति ? तरुणचन्दनतरुरिव मे गात्रशीतलः पुत्रः केनोन्मूलितः? विधेर्विधानं बहुधा विमृश्यापि नावगन्तुं शक्नोमि ।'' एवमन्यदपि बहु विलप्य विरराम । एतस्मिन्नेवान्तरे मम सप्तवर्षदेशीयः पुत्रस्तत्र समायातः। तमभिलक्ष्य मयोक्तम् – ''तात ! पश्यैनम् । अयं मे प्रथमः कुलप्ररोहः । बालविद्यालये द्वितीयकक्षायां पठति । तव नेत्रसेचनकः क्रीडनकश्च भविष्यति । तदुत्तिष्ठत्वार्यः । मुखप्रक्षालनं कृत्वा करोतु स्वल्पाहारे प्रणयम् ।'' सोऽतिथिस्तं बालं हस्ते गृहीत्वा क्रोडे संस्थाप्य शिरस्याघ्रायाशीर्वचांसि प्रयुज्य बहु ललितवान् । पश्चाच्चोत्थाय मद्दर्शिते स्नानगृहे गत्वा मुखं प्रक्षाल्य यथासुखं स्थित्वा स्वल्पाहारं गृहीतवान् ।

चिरेण गृहाभ्यन्तरप्रविष्टं मां धर्मपत्नी साक्रोशं भणितवती – ''मासस्यान्तिमेषु दिवसेष्वागतोऽतिथिः गण्डस्योपरि प्रवृद्धः स्फोट इव कदर्थनाय भवति । अस्मिन्महर्घे युगेऽत्र काश्यामुषित्वा यावज्जीवनमतिथिसेवैव भविष्यति। अध्यापकोऽसि, प्रतिमासं नियतवेतनं लभसे । व्ययादवशिष्टं यत्किञ्चित्सञ्चिनोमि तत्त्वमतिथिसपर्यायां नियोजयसि । पश्य, वयं सदैव रिक्तहस्ताः स्मः। वित्तविषये प्राथमिकशालायाः शिक्षकोऽपि त्वदधिकतरस्य कोषस्य स्वामी स्यादिति मन्ये ।'' एतादृशेष्ववसरेषु प्रायेण निरुत्तरोऽपि भार्यां प्रबोधयामि – ''प्रिये, सत्यं ब्रवीषि । किन्तु किं करोमि ? यदि कोऽपि समायाति, तं कथं तिरस्करोमि ? अतिथिदेवो भवेत्यस्माकं संस्कृतेरुपदेशोऽस्ति । मर्यादारक्षणन्तु वित्तरक्षणाद् वरम् । धनस्यैष विनियोगस्तस्य शोभेति कथ्यते । नावमाननीया अतिथय इति मत्वा यथाशक्ति सपर्ययाऽऽत्मसुखं लभस्व ।''

यद्यप्येष संवादः आवयोर्मध्ये रहसि मन्दस्वरेण चाभूत् तथापि कथञ्चिदतिथिमहानुभावस्य श्रोत्रंगतः । यदाऽहं प्रतिनिवृत्य तस्य पार्श्वेऽभवं तदा स सानुशयमवोचत् – ''वत्स! नाहं त्वत्कृते भारभूतो भविष्यामि । मत्पूर्वजैर्मयाऽपि प्रचुरा - सम्पत्तिरर्जिता विलसति । मां विहायेदानीं तस्याः भोक्ता नास्ति । अत्रागमनाय प्रस्थानकाले तव पितृव्यः स्नेहवशान्मम सौख्यमनुचिन्त्य

त्वां शरणं प्रेषितवान्। अत्र स्थितेन मया तव काचिद् बाधा न भविष्यति। तथापि यदि ममात्र स्थितिः भवते न रोचते, गच्छामि।'' एवं व्याहृत्य स स्वीयां मञ्जूषामादाय गन्तुमियेष। लज्जावनतमुखोऽहं तमनुरुद्ध्य प्रसादितवान्। गृहाभ्यन्तरं गत्वा भार्यां सर्वं विज्ञाप्य, पितृव्यमित्राय तस्मै सर्वसौविध्यं प्रदातुं निर्दिश्य यथाकालं विश्वविद्यालयमगच्छम्। सोऽपि स्नान-पूजने कृत्वा गृहीताहारो मार्गश्रमखेदापनयनाय सुष्वाप। सायंकाले प्रतिनिवर्त्तितेन मया स गृहवाटिकायां शिशुना सह मधुरप्रियालापं कुर्वन् दृष्टः।

अपरेद्युः मत्सकाशात्काशीविषये स्वाभीष्टं ज्ञानमुपलभ्य स निर्गतवान्। गङ्गास्नानं विधाय विश्वानथदर्शनं कृत्वाऽऽत्मानं पुण्यवन्तं मन्यमानः समायातः। एवमागामिदिवसेषु यथाक्रममत्र सर्वं करणीयं कृतवान् दर्शनीयं दृष्टवान्। आपणात्कदाचित् फलानि, कदाचिन्मिष्टान्नानि, कदापि क्रीडनकानि, तथा चैवमेवान्यान्यपि बहूनि वस्तूनि रमाहरतिं। मम निषेधानुरोधं न स्वीकरोति। एकदा सोऽस्मत्कृते यथायोग्यानि वस्त्राण्यपि क्रीत्वा नीतवान्। कथं भवानेवमाचरतीति मयि कथिते सस्नेहमब्रवीत्–''त्वदधिकतरः प्रियः स्वजनः कोऽस्ति ममास्मिन् संसारे ? यत्किमपि करोमि तत्सर्वं स्वपुत्रायैवेति मत्वा करोमि। त्वया किञ्चिदन्यथा न सम्भावनीयम्।''

एवं गच्छत्सु कालेषु सोऽतिथिरस्माकमनिर्भिन्नः परमप्रेमास्पदमात्मीयः सञ्जातः। गृहात्तस्य निष्क्रमणचर्चाऽपि न रोचते स्मास्मत्कर्णेभ्यः। न केवलं कुटुम्बसदस्य एवापितु गृहसंरक्षकोऽभवत्। बालकं परमप्रेम्णा शालां नयति तत्रत आनयति च। कस्यचित्सामान्या शिरोवेदनाऽपि तस्य चेतो भृशं दुनोति। सर्वं गृहोपकरणं प्रति चिन्तां विधत्ते। किं बहुना, शनैश्शनैराश्वस्तः सोऽस्माकमतिविश्वस्तः संवृत्तः। सर्वेषु प्रयोजनेषु तस्यैव मतमुचितं प्रतिभाति स्म।

अथैकदा सायंकाले विश्वविद्यालयादागतेन मया दृष्टं स्वगृहं श्रीविरहितमनावृतकपाटद्धारम्। सशङ्कमनसा यावद् गृहं प्रविशामि तावद् भार्यायाः वेदनास्वरं शृणोमि। शयनकक्षे सा हस्तपादविनिबद्धा। कुट्टिमे वस्त्रविनिविष्टमुखी

निपतिताऽसहाया तिष्ठति । मुखाद् वस्त्रं निस्सार्य तस्याः बन्धनमोचनेन सममेव सा करुणं चक्रन्द । किमभूदिति मयि पृष्टे साऽब्रवीत् – "सर्वं लुण्ठितं तेन दुष्टाशयेनातिथिकलङ्केन धूर्तवञ्चकेन । त्वयि गते सति सोऽपि परिसमापिताहारो गृहान्निर्जगाम । मध्याह्ने यदा सर्वे प्रतिवेशिनिलयाः ममेव स्त्रीसत्त्वाः पिहितद्वाराः समभवन् तदा स क्रूरकारिणा पुरुषद्वयेन सहागतः । आगत्य च द्वारं पिधाय सहसा त्रीभिरेव मम मुखे वस्त्रं निवेश्य हस्तपादाः रज्जुना निगडिताः । सोऽतिथिकलङ्कस्तु मम सर्वं गृहरहस्यं जानात्येव । यत्र-यत्र द्रव्याभूषणादीनि स्युस्तत्र तत्रान्विष्य सर्वाण्यपहृतानि मम शरीरादपि । आवयोर्बहूमूल्यानि वस्त्राणि, प्राप्तोपहारादीनि वृहन्मञ्जूषायां निधाय मां तर्जयन्तो निर्गताः ।" "कुत्रास्ति पुत्रक ?" इति मम प्रश्नोत्तरे, "सोऽपि नायातः" इति निशम्य वेगेन पलायमानोऽहं बालविद्यालयमगच्छम् । मया पृंष्टो द्वारसेवकोऽवादीत् – "अपराह्णे सार्धत्रयवादने एव स पुरुष आगत्य तं नीतवान् यः प्रतिदिनं तं बालकं नयति ।" मम दृष्टिस्तु घोरतिमिराच्छन्ना बभूव । तेन नृशंसेनावयोः प्राणाधिको बालकोऽपहृत इति नास्ति सन्देहः । मृत इव स्वशरीरभारं स्वस्कन्धमेवारोप्य कथमहं गृहमागतवानित्यपि न वेद्मि । यैरपीदं दुर्घटितं श्रुतं ते सर्वे रक्षिपुरुषाश्चागत्य विवरणं समालोच्य बहुधा समाश्वास्य गताः ।

किमिदानीं करणीयमिति लब्धसंज्ञोऽहं, 'नायं क्रूरवञ्चको मम पितृव्य-सखा भवितुमर्हतीति' सम्प्रधार्यापि स्वकं ग्रामं पितृव्यान्तिकं गतवान् । भूयसा कालेन तत्र गतं विक्षिप्तमिव च मां विलोक्य, सर्वं परिज्ञाय सोऽपि स्वशिरसं धुनोति स्म । यतो हि न तेन कोऽपि प्रेषितो नापि पत्रं लिखितम् । तत्सर्वमलीक-मासीत् । अहो तेनापकारिणा विश्वासघातिना महदनर्थकमनुष्ठितमिति समग्रो ग्रामः ग्रासीकृतः शोकेन । क्षणस्थितेन मया सहैव पितृव्योऽपि काशीमागतवान् । भार्या तु जलमन्ने सन्त्यज्य कुररीव करुणं क्रन्दती साश्रुनयना तिष्ठति । निराशया सर्वं शून्यमिव जातम् ।

पञ्चमे दिवसेऽस्पष्टमुद्राङ्कितमेकं पत्रं प्राप्तम् । तदनुसारं जीवित-बालकस्य प्रत्यर्पणाय लक्षत्रयरुप्यकं निर्दिष्टस्थले नियतसमये प्रापणीयमन्यथा

तस्या प्राणान्तमेव ज्ञातव्यमिति । नावेदनीयोऽयं वृत्तान्तो रक्षिपुरुषेभ्य इति तत्र तर्जनाऽसीत् । किन्तु मया त्वरितमेव रक्षाऽधिकारिणो निवेदिताः । तेषां पटुयोजनया न केवलं स धूर्तवञ्चको बद्धीकृतोऽपितु नृराक्षसान्मम बालकोऽपि समुद्धृतः । अपहृताभूषणादीनि चावाप्तानि । अस्तीदानीं स पुरुषाधमः कारागारस्यातिथिः ॥

**बाह्यतो दृश्यते साधुरन्तर्मलिनमानसः ।**
**विश्वासघातको धूर्तः कथायामतिथिर्यथा ॥ १ ॥**

**अतिथिः परमो देवस्तस्य सेवाऽतिपुण्यदा ।**
**भीताः कथं प्रवर्तेरन् जीवत्यहो स रावणः! ॥ २ ॥**

**कस्यचिद्दुष्कृतं कृत्वा सुखी कश्चित्कथं भवेत् ।**
**नूनमन्ते समाप्नोति दुःखदामधमां गतिम् ॥ ३ ॥**

# ॥ कर्मविपाकः ॥

अस्ति काशीपुण्यक्षेत्रस्योदीच्यद्वारभूतं सिद्धं तपोधाम महर्षेर्मार्कण्डेयस्य मार्कण्डेयमहादेव इति नाम पवित्रं प्रसिद्धं तीर्थस्थलं मार्कण्डेयपुराणे सविस्तर-समाख्यातमहिमान्वितम् । एवमनुश्रूयते पुरा किल शिशुः मार्कण्डेयो याच्छिवलिङ्गं समालिङ्ग्य यमदूतेभ्यः स्वप्राणान् ररक्ष तदेव भूतिभास्वरमुदयकालिकभास्कर-रश्मिचुम्बितं प्राचीदिङ्मुखं पातालमूलं मङ्गलैकभूतमन्वर्थसंज्ञकं शिवलिङ्गमत्र गिरिसम्प्रदायसेवितं मन्दरदारितपाषाणसुन्दरमन्दिरप्रतिष्ठापितं विराजते । पूर्वदिशि चास्य पार्श्वे सकलकलुषकवलनसकलकलकल्लोलकलितललित-जलविग्रहा पश्चिमकूलविकचविचित्रवर्णविविधपुष्परजोधूसरा भगवती भागीरथी विलसत्युत्तरवाहिनी कौबेरीदिशि च तरलतरङ्गिततोया विकटतट-तन्वीतनुरप्यन्तोगम्भीरा धीरेव सलीलं सलिलमादाय सर्वस्वं सर्वात्मना समर्पणाय समालिङ्गितुं स्वज्येष्ठभगिनीं सप्तसागरराजमहिषीं जाह्नवीं त्वरमाणेव दृश्यते गोमती । स्वर्लोकसौन्दर्यनिष्यन्दयोरिव गङ्गागोमत्योः पवित्रे सङ्गमे कृतावस्थानस्य भगवतो देवाधिदेवस्य मार्कण्डेयमहादेवस्य काप्यपूर्वामभिख्यां नयनगोचरी-कुर्वन्ति न केवलं निर्भरभक्तिभाविताः भक्तगणा अपितु सुरासुरसिद्धर्षि-मुनिवृन्दानि, दूरादपि यस्य शिवायतनस्य समुच्छ्रितशिखरपताकां नमस्कृत्य सिद्धिं लभन्ते जनास्तं प्रतिपक्षं त्रयोदशीतिथिपर्वणि पयस्विनीपूतपयोमज्जनपवित्रीकृत-कायाः समानीतसुरसरित्सलिलेनाभिषिच्य बिल्वपत्रपर्युषणेन पिनाकपाणिप्रीतिं प्राप्नुवन्ति । अत्रत्याः जनाः मार्कण्डेयमहादेवस्येममपि महिमानं महतादरेण स्वानुभूतं वर्णयन्ति यदत्र क्व अपि निरपत्यौ दम्पती श्रद्धया हरिवंशपुराणश्रवणपूर्वक-माशुतोषं समर्चयतो नूनम् प्रतिकृतप्रतीपस्य प्रतीक्ष्यपार्वतीपतेः प्रीतिप्रतीति-प्रसादेनौरससन्तानसुखमनुभवतः ।

मन्येऽहं महता पुण्येन मयाऽस्मिन् विबुधविचरणचरणाङ्कितपांसुप्रयते गङ्गागोमतीसलिलसिक्ते तीर्थक्षेत्रे स्वकीयविश्वविद्यालयस्य राष्ट्रियसेवायोजनायाः वार्षिकं दशदिवसीयं शिबिरं समायोजितम्। मार्कण्डेयमहादेवमन्दिरान्नातिदूरं पुराऽग्लाधिकारिभिः मृगयाप्रयोजनान्निर्मितमधुना प्रान्तीयशासनस्य लोकनिर्माण-विभागस्य निरीक्षणभवनमस्ति वृक्षगुल्माच्छादितपरिसरं रुचिराजिरविततमा-यताकारप्राकारपरिवेष्टितं सर्वविधावाससौविध्यसम्पन्नम्। तदालोकनमात्रेणैवोत्त-मोऽयमाश्रयो भविष्यत्यस्माकं शिबिरसन्निवेशायेति मतिं कृत्वाऽधिकारि-जनेभ्योऽनुज्ञां समवाप्य तत्रस्थभवनपालकप्रदत्तसर्वसाहाय्योऽहं शिबिरप्रतिभागि-छात्रेभ्यः सर्वाः व्यवस्थाः विधाय लब्धावकाशो गत्वा च मन्दिरं महादेवस्य प्रथमं दर्शनमकुर्वम्। लब्धदर्शनपुण्येन प्रदक्षिणां कुर्वता मया परिक्रमामार्गाव-स्थितेषु कक्षेषु, प्राङ्गणे, सम्बद्धालयेषु, धर्मशालायां पार्श्ववर्तिषु भूमिषु च महामालिन्यं सञ्चितावस्कारराशिमवलोक्य दुरवस्थां शिवायतनाभोगस्य च महान् खेदोऽनुभूतः। आसीच्च मे मनसि – "अहो! प्रमादोपेक्षा देवलकख-सूचीनाम्। शिवालयाश्रयेण दर्शनार्थिग्रन्थिभेदनैकरुचयो लक्ष्मीलाभलोभाक्षिप्त-चेताः दृष्टिमपि नैते पातयन्ति किट्टानुलिप्तमालिन्येऽपि तु स्वयमपि रुद्रमन्त्रोच्चारैः सममेवावस्करमुच्चारयन्ति। अतो ह्येतेऽश्रद्धेयास्सन्ति मन्दिराभोगविकारकरणे साधकाः न तु बाधकाः।" ततो निर्गत्य नातिचिरमिव तटं प्राप्य नेत्राभ्यां निपीयापि जाह्नवीजलमुपस्पृश्य महादेवदर्शनेन पवित्रमपि देहं मानसं च पुनरपि मया पवित्रीकृतम्। अत्रापि स्नानार्थिभ्यः प्रतिकूलं कूलं मृद्वालुकामयं निरीक्ष्य महती वेदना समुत्पन्ना। यतो हि प्रतिदिनमत्र सहस्राधिकाः श्रद्धालवो ये जनाः स्नानं कुर्वन्ति तेषु श्रद्धालवोऽपि न विद्यते। यद्यपि तैस्सर्वैरपि तटावतरणा-रोहणाभ्यां महत्कष्टमनुभूयते किन्तु न ते प्रयतन्ते मार्गसंस्काराय सोपान-निर्माणाय वा। शिबिरं प्रति निवर्तमानेन मया चिन्तितमशेषमत्रकरणीयम्। अन्यैरपि स्वसहयोगिभिः सम्यग् विमृश्य शिबिरमाध्यमेन कर्तव्ये श्रमदानकर्मणि मार्कण्डेयमहादेवमन्दिरपरिसरस्य स्वच्छता, गङ्गास्नानं कर्तुं सुगमावतरणाय मार्गनिर्माणं, सोपानसंरचनं कूलसंस्कारकलनञ्च प्राधान्येन लक्ष्यीकृतानि। अनेनैव शुभसङ्कल्पेन शिबिरप्रतिभागिभिः छात्रैस्सोत्साहैः क्रियमाणं श्रमदानकार्यं

विलोक्य तत्रत्याः ग्रामीणाः स्नानार्थिनस्तीर्थयात्रिणश्च भृशं प्रीताः यद् विश्वविद्यालयीयछात्राः नगरादागत्य ग्राम्यक्षेत्र एतादृशं श्रमकर्म जनकल्याणाय कुर्वन्तीति। शिविरायोजनस्य दशदिवसीय एव कालेऽस्माभिर्लक्ष्यीकृतानि सर्वाण्येव कार्याणि सम्यग् विहितानि। पारितोषिकरूपं मिष्टान्नफलवितरणं शिविरप्रतिभागिछात्रेभ्यः कृतमेकेन श्रेष्ठिना तत्र मन्दिरे निवसता।

कोऽयं श्रेष्ठीति जिज्ञासायामहमेकेन देवलकेन श्रीवसन्तगिरिणा विज्ञप्तो यदयं राजस्थानप्रदेशस्य कस्यचिन्नगरस्य निवासी श्रीवैभवसम्पन्नः किन्त्वपत्य-विहीनः। मार्कण्डेयमहादेवस्य प्रथितपुण्यप्रभावयशःश्रवणपवित्रीकृतकर्णः समाकर्णनायात्र हरिवंशपुराणं वंशपरम्पराविच्छेदखिन्नः पशुपतिप्रसाद-प्राप्त्याशया सभार्यः समागतः। काशीनगरादेकादशब्राह्मणानाहूयानुदिनं सविधि श्रद्धया शिवसन्निधौ सपत्नीकः शृणोति हरिवंशपुराणम्। त्रिकालिकं गङ्गास्नानं विधाय गङ्गाधरं समर्चयति करोति च सर्वमाहारादिपाकं गङ्गोदकेनैव। अत्रिभावमपनेतुमत्रिपुत्रसुन्दरसुतमुखदर्शनलालसया भक्तिनिष्ठया सर्वं सम्पादयति। एतन्निशम्य मया मनसि चिन्तितम्–"अहो वैचित्र्यं लोकस्य! शुद्धवंश्या सन्ततिः लोकपरलोकशर्मणे भवतीति जनाः वंशपरम्परां संरक्षितुं किं किं न कुर्वन्ति ? अयं तपस्वी दुस्त्यजामपि जन्मभूमिं परित्यज्य विस्मृत्य च सर्वमेकमेव लक्ष्यमङ्गीकृत्य पुत्रप्राप्तुकामोऽत्र निवसति। तपसा किं न साध्यम् ? परम-कारुणिकः पूरयत्वस्य मनोरथमाशुतोषः।"

अत्रोपगङ्गमस्त्येको विशालोऽतिप्राचीनोऽश्वत्थवृक्षः। वृक्षमेनमाश्रयत्येकः कृशकायः कपिलवर्णः कौपीनधारी कपर्दी महात्मैकान्तवृत्तिशीलः। सूर्योदयात्प्रागेव स गङ्गाप्रवाहे प्रविशति तत्रैव निमज्जत्युन्मज्जति च। कदाचित्सन्तरति कदाचिन्निमग्नस्तिष्ठति। स्तम्भाकारं जलं तस्योन्मज्जनेन सह समुत्थति निमज्जनेन सह निष्पतति च। जनाः साश्चर्यं पश्यन्ति। एवं दिवसं व्यतीत्यास्तङ्गते सूर्ये सोऽपि निष्क्रम्य तमेवाश्वत्थवृक्षमाश्रयते। इयमेव तस्य दिनचर्या। एतदधिकं वृत्तं तस्य न कोऽपि जानाति। किन्तु सिद्धोऽयं, त्रिकालज्ञोऽयमिति जनश्रुतिः प्रचलति तत्र। ग्रामवृद्धा एवमपि कथयन्ति यदि स नेत्रे उन्मील्य कमपि पश्यति, कमपि ब्रवीति तदा तस्य महद्भाग्यमुदेति।

अङ्गुलिगणनापर्याप्ताः सन्ति केचनानेन प्रसादीकृताः भाग्यशालिनः। प्रदोषकाले नैके भक्ताः तत्सकाशमुपगम्य चरणयोर्निपत्य प्रणमन्ति, तन्मुखासक्तदृष्टयो बद्धाञ्जलिपुटाः समुपविशन्ति। मौनः स निमीलितनेत्रोऽपश्यन्नपि सर्वं पश्यति। तत्सान्निध्यमेव परं कल्याणप्रदमिति मन्यन्ते लोकाः। कदाचिद्दयया स स्वकं दक्षिणकरं स्वस्तिमुद्रार्पितं करोति वर्षान्तरेषु च कस्यचित्सौभाग्येन तमालपति च। स्वकीयावस्थानावधौ प्रायेणाहमपि तत्र भवामि स्म।

स्मरामि, तस्यां रात्रौ स मामवादीत्। एतन्मात्रेणैव सर्वे मां कृतपुण्यशतमिव, गौरवगृहप्रविष्टमिव, स्वर्गादवतरितमिव, पीतामृतमिव, लब्धाप्रतिमानुभावमिव, सकललोकालङ्कारमिव, मूर्तिमत्सौभाग्यमिव, मङ्गलैकाधिष्ठानभूतमिव, समस्तार्थसिद्धिद्वारमिव, देहधारिणं वशीकरणमन्त्रमिव, वैभवस्य परां कोटिमधिरूढमिव सस्पृहमालोकयन्ति स्म। अहन्तु न जानामि तदा कस्मिन्ननिर्वचनीये आनन्दपूरप्लाविते महत्पयोधौ निमग्न आसम्। वर्षानुवर्षमविरतं सेवातत्परान् जनान् विहाय कथं मह्यं तेनात्मनः प्रसाद उपायनीकृत इति सर्वेषां विस्मयस्य विषय आसीत्। तस्मिन् दिने मया तु केवलं वृष्ट्याघातजर्जरितं तस्योपवेशनचत्वरमेव छात्रैः मृद्भरसंस्कृतं गोमयलिप्तं च कारितमासीत्। भवतु नामानया लघुसेवयैव प्रीतः स मयि स्वकां कृपादृष्टिं व्यापारयामास। दरमुकुलितनेत्र एव स मामवादीत्—"वत्स! स्वार्थवृत्तिपरोऽयं लोकः। प्रयोजनमनुद्दिश्य कश्चिदपि न प्रवर्तते। पश्येमं श्रेष्ठिवर्यम्। अयं सुदूरादत्रागत्य सन्ततिप्राप्त्यर्थं शिवसन्निधौ श्रीहरिवंशं शृणोति महादेवमाराधयति मां च नित्यमुपासते। अस्य सन्ततिरोधस्तु जन्मान्तरकर्मविपाकेन। पूर्वजन्मनि स एष दारुणदारुदारक आसीत्। अस्य प्रचण्डपरशुनिशितधारया छिन्नमूलाः सहस्र-सहस्राः वृक्षाः धराशायिनो बभूवुः। वनच्छेदाय कठिनकुठारं स्कन्धमारोप्यागच्छन्तं कृतान्तमिवैनमालोक्य महावनस्पतयोऽपि भयार्ताः वेपन्ते स्म। एते वनस्पतयोऽपि जीवा अन्तःसंज्ञाः सुखदुःखसमन्विताः भवन्ति। अतएव वृक्षच्छेदनं जीवहत्यैव। अस्य श्रेष्ठिनस्तदानीं वृक्षच्छेदस्यानाचारैर्वनदेवता भृशं चुकोप। रोषावेशविवशा वनदेवतैनमभिशप्तमकरोत्—"रे नृशंस! आगामिनि जन्मनि सन्ततिमुखं न द्रक्ष्यसि। छिन्नतरुपतनघोररवविलुप्तं शापवचनमनेन न श्रुतम्।" एतस्मिन्नेवान्तरे मया

शङ्कितम् – "भगवन्! यद्ययमीदृशः क्रूरोऽभिशप्तश्चासीत्तत्कथमस्य मानवयोनौ जन्म ?" स नेत्रे निमील्य क्षणं विरम्य प्रोवाच – " एकदाऽनेन वने मार्गभ्रष्टो जनः तृषार्तः कण्ठगतप्राणो जलदानेन मृत्युमुखादुद्धृतः। परमप्रीतस्य तस्याशीर्बलादयं मनुष्ययोनिं पुनरवाप्य दरिद्रश्रेष्ठिकुले जन्म लब्धवान्। प्राप्तवयसाऽनेन स्वीयाध्यवसायेन बुद्धिचातुर्येण च प्रसादिता लक्ष्मीः स्वायत्तीकृता। अयमेवास्य वृत्तान्तः।" एतच्छ्रुत्वा श्रेष्ठिवरो महात्मनश्चरणयोः कातरभावेन शिरसा पपात। ततश्च सानुनयं मया पृष्टम् – "भगवन्! अस्ति कश्चिदुपायोऽस्य शापनिवारणाय सन्ततिप्राप्तये च ? तेन शान्तमनसोक्तम् – "नास्ति किमप्यसाध्यं नाम। यद्ययं वृक्षारोपणैस्तेषां संरक्षणसंवर्धनैरवनितलं वनमण्डितं विधाय वनदेवतां प्रसादयेत्ततः सैवास्मै शापशोकविरतिं दातुं शक्नोति।"

विगतमासे प्रायेणवर्षत्रयानन्तरं मार्कण्डेयमहादेवदर्शनायागच्छम्। तत्रागङ्गागोमतीतटं श्यामलं वनराजिमनोहरं प्रदेशं वीक्ष्य महादेवदेवलकं कञ्चिदपृच्छम्। सोऽकथयत् – "पुत्रेच्छुः कश्चिद्राजस्थानस्य श्रेष्ठी वर्षत्रयपूर्वमत्र सिद्धादेशेन वृक्षारोपणमकार्षीत्। श्रूयते यत्स स्वजन्मभूमिं गत्वा तत्रापि वृक्षारोपणसंरक्षणाभियानमारब्धवान्। महादेवप्रसादेन वनदेवतादयया च तेन पुत्ररत्नं लब्धम्। तत एव स प्रतिवर्षमत्रागत्य महाशिवरात्रिपर्वणि शिवार्चनमहोत्सवमायोजयति। कानिचिद्दिनान्यवस्थाय समीपवर्तिषु ग्रामेषु वृक्षारोपणाय साहाय्यं वितरति।"

वनदेवतामहिमानमनुचिन्त्य विस्मितो हर्षपुलकनिर्भरश्चास्मि॥

**वृक्षारोपणपुण्येन वनवन्यसमृद्धये।**
**पर्यावरणरक्षायै कथेयं कल्पिता मया॥१॥**
**पापपुण्याख्यलोकेऽस्मिन् मनोवाक्कायकर्मभिः।**
**यत्क्रियते मनुष्येण विपाकस्तस्य लभ्यते॥२॥**
**कथाकथ्यं समाकर्ण्य तथ्यं चाप्यनुचिन्त्य हि।**
**वनसंवर्धने बुद्धिर्येषां तेषां सुसन्ततिः॥३॥**

●

## ॥ जल्पाकः ॥

अहो वैचित्र्यं सृष्टेः! विधेः रचनाविधानवैविध्यं रुचिररुचिचित्रत्वं कलितकल्पनावैभवं विलोक्य मानवस्तस्य कर्मनैपुण्यसामर्थ्यं साश्चर्यमभिनन्दति। कल्पनाधिकसंख्याः स्थावरजङ्गमाश्चेतनाचेतनसङ्घाताः विलसन्त्यस्माकं दृष्टिपरिधौ। विस्तरेण किम् ? पश्यतु केवलं मानवम्। विलक्षणोऽयं प्राणी मानवः। अत्रापि केवलं जल्पनप्रकारं विविच्य नराणां कोटिगणनाप्यशक्या। केचन मूकाः, केचन मितभाषिणः, केचन बहुभाषिणः, केचिद्वाग्मिनः केचिद्वाचाटाः, केचन मौनावलम्बिनः, केचन जल्पाकाः मिथ्याप्रलापिनः। यद्यप्यहं जल्पकानां जल्पवृत्तिप्रवृत्तिनिमित्तं न जानामि तथापि तेषामुत्फुल्लगल्लालपैः श्रोतॄणां निर्मूल्यं मनोरञ्जनं भवत्येव।

प्रजापतिप्रासादे मदीयो ग्रामोऽपि प्राप्तप्रसादोऽस्ति। अस्त्यत्रानल्पजल्पजालमुखवंशो यस्मिन् वंशप्ररोह इव जल्पाकसन्ततिः प्रभवति। कृतानि पुत्रैरकृतानि पूर्वैरिति न्यायेनोत्तरोत्तरप्रकर्षेण ते विधिप्रदत्तां जिह्वाकण्डूतिमपसारयन्ति। तेष्वेव महामेधावी जल्पकमनुष्यमणिमालामेरुरत्नमिवास्ति विकत्थनपरः पुरुषो यस्याविस्मरणीयैर्जल्पनप्रकारैर्जनाः भृशं मोदन्ते। तस्य कुटुम्बादर्शवाक्यमस्ति – 'अस्माकं पूर्वजाः घृतं पिबन्ति स्मेत्यवेहि मुखमाघ्रायास्माकमिति।' अतो हि जल्परसिका तस्य रसना स्फीतं सरसं रसति रसयति च।

अथ कदाचित् पञ्चवर्षीयं निजं पुत्रं विलोक्य तस्य मनस्यायातम् – "अयमपि मादृशो मा भवेदित्येनमस्य नमस्यमातामहगृहं नेष्यामि। वसत्वयं तत्रैवाकौमारम्। मम सन्निधिवियुक्तेऽस्मिन् जल्पनस्वभावो विकारं नैष्यति। यतो हि लोको जल्पाकं नादरेण पश्यति।" एवं बहुधा विचिन्त्य स पुत्रेण सह श्वसुरालयं गतवान्। श्वसुरं सर्वं निवेद्य पुत्रं तत्रैव संस्थाप्य गृहं प्रतिनिवृत्तः। व्यतीते वर्षद्वये श्वसुरालयं गत्वा पुत्रमवलोकयामास। जातः कीदृशो

जात इति मनसि निधाय परीक्षणार्थं तेनोक्तम्–"वत्स! अत्रागमनकाले पथि नदी मया कथमुत्तीर्णेति जानासि?" "नाहं जानामी"ति पुत्रे कथिते सोऽब्रवीत्–"यदाऽहं नदीतीरं प्राप्तस्तदा तत्र तरणी काचिन्नासीत्। शीघ्रमेव रात्रिर्भविष्यतीति तत्स्थानं निर्जनमवलोक्य कृतनिश्चयेन मया नद्युत्तरणाय वेगेनोत्प्लवनं कृतम्। यावदुत्प्लुत्यापरं कूलं मयाऽऽसादितं तावन्मम पादाघातेन विध्वस्तस्तत्प्राकारो नद्यां पपात। इयं भगवतो महत्यनुकम्पैव यदहमत्राक्षत-शरीरः सम्प्राप्तः।" एतावच्छ्रवणमात्रेणैव पुत्रः गण्डस्योपरि स्फोट इव तस्य जल्पने स्वकीयं सातिशयं जल्पनं शिलष्टवान्–"अहो तात! सत्यमिदं तटप्रध्वंसनम्। तदानीमहं ग्रामाद्बहिर्बालकैस्सह क्रीडन्नासम्। तस्मिन्नेव काले ममोपरि नदीजलविन्दवो निपतिताः। पश्यतु, नदीजलार्द्रं मदीयं कञ्चुकम्। मन्येऽहं तज्जलानि तटप्रपातोत्पतितान्येवासन्।" निशम्यैतज्जल्पाकशिरोमणिः–"अयन्तु मामप्यतिक्रामति मम शिरसि पदमनेन न्यस्तमिति" सम्प्रधार्य तमात्मना सार्धमेव गृहं नीतवान्। प्राप्तवयसाऽनेन पुत्रेण स्वपितुरधिकतरा ख्यातिस्सम-र्जिता। अप्रतिमोऽयं जल्पाकवर्यः समस्ते मण्डलेऽद्वितीयत्वेन प्रथितोऽभूत्।

स्मरामि गतवर्षं यदा मम ग्रामं एका वरयात्रा समागता यस्यां केचन जल्पका अप्यासन्। एतादृशा जनाः स्वयमेव विभाव्यन्ते। अस्मद्ग्रामवासिना जल्पाकवर्येण सहैतेषां साम्मुख्यमवश्यमेव विधातव्यमिति केचन कन्यापक्षीयाः कुतूहलिनो युवानो मनोविनोदाय प्रस्तावितवन्तः। अस्मत्पक्षीयो जल्पाकशिरोमणिः– 'अद्य पश्यन्तु सर्वे मम वाक्कौशलमि'ति प्रस्तावं सहर्षं स्वीचकार। सोऽपि वरपक्षीयो जल्पाकः–'कोऽपि तिष्ठति समानधर्माऽत्र ग्रामे' इत्यवलेपभरेण स्वरेण स्पर्धायै स्वीकृतिं दत्तवान्। नियतसमये पक्षद्वयस्य जनाः कौतुकाकुलाः वरयात्राजनावासभवने समवेताः बभूवुः। अहमपि सहजजिज्ञासा-वशान्मनोरञ्जनाय तत्र गतवान्। वाग्व्यवहारसोपाने कः प्रथमं पदं न्यसेदिति वितर्के कन्यापक्षत एको वृद्धोऽब्रवीत्–"वरपक्षस्त्वस्माकमतिथिर्देवतुल्यः पूजार्हः। अतोऽस्मिन् प्रसङ्गे प्राथम्यं तस्यैवोचितम्।" सर्वैरनुमोदितमिदं वाक्यमुपश्रुत्य

वरपक्षीयो जल्पाकः जल्पितुमारेभे – "भवतु, श्रूयताम्। मम ग्रामे एकेदृशी खट्वो दीर्घायता विद्यते यस्यां सहस्राधिका जनाः सहैव स्थातुं शक्नुवन्ति।" कन्यापक्षीयोऽपृच्छत् – "कियत्परिमाणवती सा ?" तेनोक्तम् – "प्रायेण सहस्रद्वयहस्तप्रमाणेति।" क्षणं यावन्मौनमवलम्ब्यास्मत्पक्षीयो जल्पाकोऽवादीत् – "वयमेतादृशं दीर्घं वंशदण्डं धारयामो येन यदा वयमिच्छामस्तदा मेघान्निर्भिद्य वृष्टिं कारयामः।" वरपक्षीयो जल्पाकः शिरोऽवघूर्ण्योपहासभङ्ग्या पृष्टवान् – "तद्दण्डं कुत्र स्थापितम् ?" अयं जल्पाको विहस्य सूचितवान् – "अहो, भवता न दृष्टम् ? तत्तु भवद्ग्रामखट्वायामेव निक्षिप्तम्।" एतन्निशम्य परो जल्पाको नताननो बभूव सर्वे च हसन्ति स्म।

अथ किञ्चिद्विरम्य स प्रोवाच – "एकदा मया त्रोत्रेणैकः सिंहो व्यापादितः।" अनेन जल्पाकेन सस्मितमुक्तम् – "साधु, भोः! साधु। नाश्रद्धेयं त्वद्वचनम्। यतो हि निरायुधेन मयाप्यैकः केसरी हतः।" अपरो जल्पाकः सकुतूहलमपृच्छत् – "तत्कथम् ?" अननेनोक्तम् – "तदाख्याने व्रीडामनुभवामि। किन्तु यदि भवते रोचते, कथयामि। श्रूयताम् – एकदा निशीथे उदरविकारपीडितोऽहं वेगेन गत्वा यावद् ग्रामाद् बहिरेकस्मिन् क्षेत्रे उपविशामि तावन्मया नातिदूरमुपविष्ट एकः सिंहो दृष्टः। सोऽपि मानवगन्धमाघ्रायोच्चैर्जगर्ज। सिंहस्य गर्जनश्रवणमात्रेणैवाहं सर्वं विस्मृत्य सहसोत्प्लुत्यैकं चणकवृक्षमारुह्यातिष्ठम्।" अस्मिन् वचसि प्रतिपक्षिणोऽविश्वासभावमालक्ष्यानेनोक्तम् – "अलमुद्वेगेन। अस्मद्ग्रामे एतादृशाश्चणकवृक्षाः प्ररोहन्ति यदुद्ग्रीवोऽप्युष्ट्रो न शक्नोति तत्फलान्यासादितुम्। अथ चणकवृक्षस्थं मां सः केसरी सरोषैरुत्पतनैरवाप्तुमारेभे। बारम्बारमुत्प्लुत्य यदा स श्रान्तोऽभूत्तदा मया झटिति झम्पवल्गितेन लक्ष्यीकृतं तत्पृष्ठमारुह्य दृढमुष्ट्या सटाः गृहीताः। ससम्भ्रमः सोऽपि मां पातयितुं द्रुतं धावति स्म। अहन्तु पृष्ठाश्लिष्टः पादावाकुञ्च्य दृढमुष्टिगृहीतसटस्तं तावद् धावितुं कारयामास यावत्सोऽतिक्लान्तो निपत्य गतासुरभूत्।" अस्य वाक्चातुर्येण सर्वे चमत्कृताः।

तदनन्तरं वरपक्षीयो वराकः किमपि जल्पितुं नोत्सहते स्म। किन्तु वरयात्रिकृतोत्साहः पुनश्च जल्पनं प्रायुङ्क्त – "एकदा मया पादकन्दुकक्रीडायां कन्दुकोपर्येतादृशः पादप्रहारः कृतो यत्तत्कन्दुकं वियति होराद्वयं यावत्परिक्रम्य

क्रीडाक्षेत्रे निपतितम् ।'' समृद्धोत्साहोऽस्माकं जल्पाकः प्रतिजल्पितवान् – ''बाढं, प्रकृष्टोऽयं बलाघातः। अहमपि कन्दुकेन क्रीडामि। एकदा दलनायकेनाहं भणितः – '' प्रहरसि ? कन्दुकं क्षेत्रमध्यमपि न प्रापयसि ?'' ततश्च क्रुद्धेन मया कन्दुकोपरि तादृशः पादप्रहारः कृतो यत्तद् वियत्युद्गत्य विलुप्तमभूत्। षष्ठेऽहनि तत्कन्दुकं ग्रामवापिकायां प्लवमानं जनैर्दृष्टम्। यदोद्धृत्यानयन्ति तदा च विस्मिता आसन् दृष्ट्वा तदुपरि लिखितम् – ''मङ्गलग्रहे निपत्यानेन पिण्डेनातिविध्वंसः कृतः। एतादृशं वस्तु कदापि भूवासिभिर्नोत्क्षेपणीयमिति तर्जयन्ति मङ्गललोकवासिनः।'' एतच्छ्रुत्वा विस्मितैरुभयपक्षजनैः करपुटवादन-पुरस्सरमस्याभिनन्दनं कृतम्। ''न त्वत्तः पारयामी'ति सोऽपि जल्पाकः एनं सभाजितवान्। विस्मितेन मयाऽपि चिन्तितम् – ''एभिरेव पञ्चमहाभूतै-र्निर्मितोऽयं जल्पाकः कीदृशं कल्पनोद्भवभावभावितं प्रत्युत्पन्नमतित्वं धारयति। किन्तु सत्यं ब्रूयात्प्रियं ब्रूयादिति वाग्धर्मं हित्वा कथमसत्यं प्रियं ब्रवीति ? नैनं पापभयं प्रतिबध्नाति ?''

अथ गच्छत्सु कालेष्वेकदाऽयं जल्पाकशिरोमणिः किमपि प्रयोजनमुद्दिश्य मम सकाशं समागतः। प्रयोजनवार्तानन्तरं स मया पृष्टः – ''किमर्थं जल्पसि ? असत्यवाग्व्यवहाराद् यत्पापं प्रभवति तस्मान्न बिभेषि ?'' स किञ्चिद् विहस्य प्रोवाच – ''नाहमसत्यं ब्रवीमि। जल्पनं त्वेका विद्या कला वा नानृतम्। नानेन कोऽपि दूयते न कस्यचिद्हानिरपि भवति। तत्कथमस्मात्पापं प्रभवति ? विचारय तावत्सर्वे जल्पितुं न प्रभवन्ति। जल्पनाय महती बुद्धिरपेक्षते प्रत्युत्पन्नमतित्वञ्च। तत्कथय, कश्चित्कथाकारः किं करोति ? मिथ्यैष तस्य व्यवसायः। कल्पितानि पात्राणि संयोज्य कल्पितेतिवृत्तेन स कथाग्रन्थं निर्माति। एतत्तु लिखितं जल्पनमस्माकन्तु वाचिकमेव। तस्मिन्नैके रसाः सम्भवन्ति, भवत्यस्मिन् केवलमद्भुतरसः। यदि सर्वे साहित्यकाराः कल्पनावैभवमाहृत्य नरकं गन्तुमुत्प्रेक्षन्ते तत्कोऽहं वराकः ? किं तु यदि ते स्वकर्तृत्वबलेन पुरस्कारमर्हन्ति तत्कथं नाहम् ? महती खलु विडम्बना यत्तदेव कर्म कुर्वन् कश्चन् यशोऽर्थञ्च समाप्नोति, स्तूयतेऽभिनन्द्यते चापरस्त्वनेनैव कर्मणा निन्दितः तिरस्कृतश्च भवति। जानामि जल्पाकं प्रति लोकभावनाम्। किन्त्वनया नाहं हतोत्साहः। जल्पनमपि वाग्देवताया एका विच्छित्तिः। यथा काव्यस्य

परमप्रयोजनमानन्दस्तथैव जल्पनस्यापि। नाहमत्र दोषं पश्यामि। अस्मिन् विषये त्वहमेतदेव कथयामि– "ज्ञातास्वादो विवृतरसनां को विहातुं समर्थः ?"

तस्य तर्कसङ्गतप्रत्युत्तरेण जल्पनविषये मे दुर्भ्रान्तिर्विगलिता। कातरमिव मामालक्ष्य सोऽब्रवीत्– "माऽन्यथा सम्भावय। यल्लोके प्रचलति तदेव भवताचरितम्। लोकं विहाय का गतिरस्माकम् ? किन्त्वचिरेणैवात्र न भवामि।" विस्मितेन मया पृष्टम्– "कुत्र गमिष्यसि ?" सस्मितेन तेनोक्तम्– "अद्यैव ब्राह्ममुहूर्ते मामरावतीं नेतुं देवेन्द्रप्रेषितेन मातलिनाऽगत्य सादरं मह्यमेका पारिजातपल्लवे लिखिता पत्रिका दत्ता। तस्यां देवेन्द्रेण लिखितमस्ति– "आर्य, जल्पाकशिरोमणे! मर्त्यलोकात्समागतैस्त्वज्जल्पनानन्दनिर्भरैर्जनैस्तव यशोगाथां श्रावं श्रावमियं देवसभा त्वां द्रष्टुं श्रोतुञ्च भृशमुत्कण्ठिता वर्तते। तदत्रागमनेनास्मच्चिरमभिलषितमशेषं कर्तुमर्हसि।" मया स पणमेकं सन्दिश्य प्रेषितः– "यद्यहं सभार्योऽनुमतोऽस्मि तदैव नाकलोकं सनाथीकरिष्यामि।" मन्येऽहं, श्वः सभार्यं मां मातलिरवश्यमेव नेष्यति। भवतु, गच्छामि यात्राप्रबन्धाये" त्युक्त्वा गतः।

अन्येद्युः ग्रामवीथ्यां विचरन्तं दृष्ट्वा तमपृच्छम्– "कथय, नाकलोकं न गतोऽसि ?" साट्टहासं तेनोक्तम्– " अपि मृन्माधव! बालाय तुभ्यं नमः। जानासि कोऽहम् ?" सहसा मे हास्यविवृतमुखान्निर्गतम्–

**"आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवत्कश्चिदेनं शृणोति।**
**धन्योऽसि जल्पाकशिरोमणे! त्वं वाग्देवताश्चर्यवपुर्नतोऽस्मि॥" १॥**

**जल्पनं बहुधा लोके जल्पाकैस्तु प्रवर्तितम्।**
**श्रुतमेव भवेन्नूनं भवद्भिर्भावभूषितम्॥ २॥**

**कथायामत्र मत्प्रोक्तं किञ्चित्तत्र निदर्शनम्।**
**मानसं रञ्जयेल्लब्ध्वा कर्णातिथ्यं प्रहर्षणम्॥ ३॥**

## ॥ दशाचक्रम् ॥

भिन्नरुचिर्हि लोकः। केनापि ग्राम्यं जीवनं वरं मन्यते केनचिन्नागरं जीवनम्। मह्यं तु ग्रामजीवनं भृशं रोचते। अतो नगरेषु बहूनि दिनानि व्यतीत्यापि सेवानिवृत्तेः पश्चात्स्वीये ग्राम एव कृतसन्निवेशः शेषं जीवनं सुखं यापयामि। अनुभवामि च दिनानुदिनवर्धमानप्रदूषणमयेऽस्मिन् महति सङ्कटकाले ग्रामपरिवेशपरिशीलनं नगरादधिकतरं स्वास्थ्यप्रदम्। किन्तु नगरं विनाऽपि प्रयोजनं न सिद्ध्यति, तस्मात्तदपि सेव्यमेव।

एकदा मम पुत्रस्य लोकसेवा-आयोगस्य परीक्षाकेन्द्रं ग्रामात्सुदूरमेकं महानगरं निर्धारितम्। एतत्प्रयोजनमुद्दिश्याहमपि पुत्रेण सह तन्नगरमगच्छम्। परीक्षासमाप्तेरनन्तरं नगरं द्रष्टुकामावावां यदृच्छयेतस्ततः पर्यटनमारेभाते। प्रशस्तान् जनसङ्कुलान् राजमार्गान्, सुदीर्घा वीथीः, रमणीयान्यतिविस्तृतान्युपवनानि, स्फुरद्धारायन्त्रसज्जिता निर्मलजललसिताः प्रसृतपत्रोद्भिन्नकमलकमनीया दीर्घिकाः, राजमार्गमुभयतोऽभ्रंलिहाग्राणि भव्यवैभवविभावितभवनानि, विविधविचित्रवस्तुराजिराजितपण्याजिरशाला दर्शं दर्शं नगरालोकनकौतुकाक्षिप्तमानसोऽपि स्वेदसीकरसिक्ताननः स कुमारः श्रान्त इव विश्रमाय मन्मुखासक्तदृष्टिरभूत्। तस्याशयं विभाव्य यावत्कमप्यल्पाहारापणमनुसन्दधामि तावदेकः सुजनः पश्चादागत्य ससम्भ्रमेण स्वजनाविवावामाकारयामास। गमनं निरुध्य विवर्त्य च दृष्ट्वा तमविज्ञातं पुरुषमपृच्छम्–"कस्त्वं भोः, कथमाकारयसि ?" स तु सत्वरं मामुपसर्प्यावादीत्–"प्रेषितोऽहं स्वामिना भवन्तमानेतुं तत्रापणसदने। अतो गमनाय प्रसीदतु।" "भवतु, चलामी"ति तमाश्वास्य तर्काविष्टमनसा मया सोऽनुसृतः।

अथ सपुत्रोऽहं कियन्मात्रमध्वानमतिक्रम्य यावदेकस्य विपुलायामशोभिपण्यभवनस्य द्वारमुपसर्पामि तावदन्तःप्रविष्टेन तेन सेवकेनाभीष्टसङ्केतमवाप्य

सुखासनात्सहसोत्थाय महता प्रश्रयेण चरणस्पर्शपूर्वकं प्रणाममकरोदेकः साधुपुरुषः सौम्यानुभावोऽप्रतिमप्रभावो मधुरस्वभावः प्रायेण पञ्चाशद्वर्षदेशीयः। तत्र विद्युत्प्रकाशदीप्तकाचमयेषु मञ्जूषाफलकेषु रुचिराणि नानावर्णानि स्यूतिप्रकल्पितवस्त्रपरिधानानि दृष्टिमनायासमेवाकर्षयन्ति स्म। एकतोऽस्यापणस्य शोभाढ्योन्नतवैभवमपरतस्तस्य स्वामिनः प्राञ्जलेः प्राञ्जलविनतं महदाश्चर्यकरं व्यवहारं विलोक्य विस्फारितनेत्रयोरावयोः प्रेक्षणबद्धदृष्टिमुग्धता भङ्गीकृता तस्य सानुनयेन हृदयमिवादाय निर्गच्छता श्रद्धयाऽक्षरीकृतामृतरसनिष्यन्दवचसा– "प्रासादोऽयं भवत एव प्रसादः। प्रसीदतु, पुनातु पादपांशुभिरिमम्। व्रजतु धन्यतामयं जनः।" रहस्यगर्भितं तस्य वचो निशम्यात्मविस्मृतेरुद्धृतोऽहं पण्यसौधान्तः प्रविष्टः सन्नेकस्मिन् परमप्रसाधिते प्रकोष्ठे प्रापितः। शीततापनियन्त्रितकक्ष उपविष्टयोरावयोः शरीरात्स्वेदबिन्दवः स्वयमेव प्रणष्टाः। कक्षकुट्टिमे शबलमृदुलतन्तुविनिर्मिततौरुष्कास्तरणं, तदुपरि विन्यस्तप्रशस्तसुखस्पर्शस्फण्टमयपर्याणपरिमण्डितानि तल्पासनानि, मध्ये दीर्घायताण्डाकारं स्फटिकफलकम्, कोणेषु घ्राणतर्पणमधुरामोददायिनानावर्णाकृतिपुष्पस्तबकभरितस्वर्णदीप्तारकूटधातुमयपुष्पधानीः, भित्तिषु नेत्रनिर्वाणप्रदस्निग्धरुचिरसन्निविष्टरागरञ्जिततैलचित्राणीति विस्मयावहां कमनीयां कक्षसज्जामवलोक्य यावदन्यलोकं प्राप्तमिवात्मानमनुभवामि तावदनुशिष्टशिष्टसेवकसमानीते स्वल्पाहारे प्रणयाय निवेदितवान् स आतिथेयः। तस्याग्रहेण गृहीत इवायं जनः सहसा सुप्तोत्थित इव नेत्रे प्रमृज्य यावदुन्मीलयति तावत्पश्यति स्फटिकफलकं सुस्वादुभिः खाद्यपेयपदार्थैरापूरितम्। परमप्रीत्युपनतेन विनतेन तेन स्वहस्तेनार्पितेन मधुरास्वादशिशिरतरपेयेन पिपासामुपशम्य पश्चाच्च मधुरं लवणं च भोज्यमुपभुज्यावां परां तृप्तिं जग्मतुः।

सुचिरं विश्रम्यातिथेयस्य परिचयं ज्ञातुकामोऽपि प्रकटतया तं किमपि प्रष्टुं नाशक्नुवम्। स तु ममान्तर्भावं विज्ञाय कृतज्ञताभारभराक्रान्तमिव शिरसमवनम्य कृतसेवाविधानेन परमतुष्टहृष्टमना मनागपि संशयावकाशमदातुमिव सस्मितं सधीरमुवाच– "तात! अपि स्मरसि कामपि वृद्धां गृहसेविकां स्वकीये शासन-

सेवाकाले कर्णपुरनगरे ? तस्या एव मन्दभाग्यायाः पुत्रोऽस्त्ययं जनो यस्येदं वैभवं तेऽनुग्रहख्यातिमाख्याति। यतो हि पण्यसौधसङ्कुलमिदं भवतोऽभिख्याक्षरैः व्यपदिश्य विहितं 'मनोहरमुकुलमि'ति। एतद्वचो निशम्य तस्याननं निपुणं निरीक्ष्य मन्मुखात्सहसा निर्गतम्– "अहो, प्रियवत्सो मुकुलः!" उत्थाय च तं दोर्भ्यां कण्ठेनाश्लिष्य चिरं चिरन्तनैराशीर्वचोभिः पावितैरानन्दाश्रुजलैस्तस्य मूर्धानं सिषेच। सोऽप्यभ्यर्थितं मनःप्रसादं सम्प्राप्यात्मानं बहु मन्यमानः प्राप्तसकललोकलाभ इव, पीतामृत इव, पितुरङ्कगतः शिशुरिवामन्दानन्दस्य परां कोटिमधिरूढ इव, विषमगदोल्लाघलघुरिव श्रेयसमनुलिप्तः प्रेय इव तस्थौ।

अथ मुकुलो मोटरयानेनावां स्वावासगृहमानीय सबहुमानपुरस्सरमावयोः प्रत्यभिज्ञानं कुटुम्बिजनान् विज्ञापयामास। तस्य श्रीविलासविलसिता सहजलज्जाशीला भार्या, वश्या सन्ततिराज्ञाकारिणश्च भृत्याः सर्व एवैवं व्यवहरन्ति स्म यथाऽहं दिव्यलोकादवतीर्णः कोऽप्यभीष्टो महनीयो देवोऽस्मि। रात्रिविश्रमानुरोधविकलान् तान् सर्वान् पुनरागन्तुं समाश्वास्याशेषं जनमापृच्छ्यावां ग्रामं प्रति प्रस्थितवन्तौ। विश्राणितैर्विशिष्टैः प्रभूतैश्चोपायनैस्सह मुकुल एवावां रेलयानविश्रामस्थलं नीतवान्। यथाकालं समागते रेलयाने प्राप्यारक्षितशयनयानशयिकां मम पुत्रस्तु दिवसाटनश्रमवशाच्छीघ्रमेव निद्रामभजत् किन्त्वहं मुकुलं तस्य दशाचक्रञ्चानुचिन्तयन् निमीलितनयनोऽपि प्राप्तप्रजागरः मुहुर्मुहुर्वलनैस्तां निशामनैषम् ।

अपरेद्युः प्रातःकाले विहितसमयोचिताचारः कुमारो मामपृच्छत् – "तात! कोऽयं मुकुलः? कथं त्वया सह सम्बद्धः? आख्याहि मे सर्वं वृत्तान्तम्। व्यपनय मे कुतूहलम्।" जातस्य जातां जिज्ञासां श्रुत्वा स्मृत्वा च जीवनैकदेशस्य तद्वृत्तं मे हृदि महानुल्लासः समजायत। प्रसन्नवचसा मयोक्तम्– "वत्स, व्यपनयामि ते कुतूहलम्। श्रावयामि मुकुलवृत्तान्तम्। श्रूयताम् –

मम कर्णपुरसेवाकाले कदाचिदवकाशदिवसे गृहद्वारकपाटे हस्तप्रहारशब्द इवाश्रूयत। द्वारस्थां विद्युद्घण्टिकामनवेक्ष्य कोऽयं मूढ इव कपाटं

प्रहरतीति संक्षुब्धमना यावत्कपाटमुद्घाटयामि तावदेका जराजीर्णा मलिनवसना कारुण्यमूर्तिः देहधारिणी याचनेव तुषारहताकुमुदिनीव, निराशया परिगृहीतेव, दुर्दैवत्रस्तेव वृद्धा स्त्री समदृश्यत। आलोकनमात्रेणैव सा मम चरणयोर्निपत्य साश्रुमुखी दन्तहीनास्येन सायासमप्यस्पष्टं जगाद् – "अपि भवान् गृहकार्यार्थमेकां सेविकां वाञ्छति? नियोजयतु मां दीनाम्। अशेषं ते गृहकार्यजातं सम्पादयिष्यामीत्यभ्यर्थये।" तस्याः स्खलदसमञ्जसजल्पितं निशम्याहूय च गृहान्तराद्भार्यां मन्त्रितवान्। वृत्यभिलाषिणी वित्तहीनाऽप्येषा वृत्तसम्पन्ना मे प्रतिभाति। अतो नियोक्तव्या गृहकर्मणीति विनिश्चित्य मया प्रोक्तम् – "मातः। लघुतमे मे कुटुम्बे न विशेषं किमपि करणीयं विद्यते। तथापि तुभ्यमाजीविकां दातुमत्र नियोजयामि।" शुष्यमाणे सस्ये धारासार इव मम वचनं श्रोत्राभ्यां निपीय साऽपूर्वोत्साहसम्पन्ना समपद्यत्। ततः प्रतिदिनं प्रत्यूषे समागत्यादिवसं कुटुम्बसदस्येव तव जनन्याः साहाय्यं विदधाति स्म।

एकदा तया सहागतं प्रायेण सप्तवर्षीयं बालकं दृष्ट्वा मया पृष्टम् – "कोऽयं बालः? सम्बन्धे तव को भवति?" एवं मयि पृष्टे तस्या वृद्धाया नेत्राभ्यामजस्रास्रधारा निरर्गलं निर्गलिता। आत्मानमपराधिनमिव तन्मर्मवेधकं मन्यमानोऽहमवोचम् – "मातः! मा रोदीः। कर्मणां गतिं रोद्धुं न कोऽपि प्रभवति। एवं तु सततनयनजलसिच्यमानस्तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति। यदि मे वचसा कोऽप्याघातव्रणः पुनर्नवीकृतस्ततः क्षन्तव्योऽयं जनः।" सा वृद्धा दारुणक्रकचपातजनितवेदनाभ्यर्दितेव करुणस्वरेणोवाच – "मैवं ब्रूहि। क्वाहं दुर्दैवविडालदंष्ट्रभ्रष्टमूषकीवास्य बालस्य मोहगर्तनिपतिता वराकी क्व त्वादृशो निरालम्बां मां विपत्सागरादुद्धर्तुं समागतो देवदूतः! मन्येऽहं पूर्वजन्मकृतं पापं भोक्तुमेव जीवामि। दुरन्ता हि मे व्यथाकथा। अत्र नगरे मम पतिः कुत्रचिच्छिल्पशालयां श्रमिक आसीत्। तदानीमावयोरङ्के पुत्ररत्नमेकमासीत्। तानि दिनानि महत्सौख्यकराण्यासन्। एकदा तस्यां शिल्पशालायां दुर्घटितेन बहवः श्रमिका व्यापादिताः। तस्मिन्नेव दैवहतकेन मम पत्युः

प्राणानपहृत्य मह्यं वैधव्यमुपहृतम्। जातस्य मुखं निभाल्य हृदयं वज्रनिभं विधायाहं गृहाद्गृहान्तरेषु भाण्डमार्जनादिभिस्तस्य पोषणमकरवम्। सोऽपि वयस्को भूत्वा तस्यामेव शिल्पशालायां स्वपितृमृत्युकारणात् श्रमिकपदं लब्धवान्। नियतेर्नियतविधानं ज्ञातुं कोऽर्हति? कृतदारपरिग्रहः स परम-प्रीतः कालं नयति स्म। अहमपि विगतं विस्मृत्य ताभ्यां सह प्रकटमोदा चरामि स्म। किन्त्वस्माकं सुखं दैवेन सह्यं नासीत्। प्रसवपीडाव्याजेन तेन बलादेव सा वधूः स्वायत्तीकृता। शिशुरयं मे क्रोडे निपतितः। तद्दिनादस्य पिताऽपि शय्याङ्गतो रुजाक्रान्तः पुनः कदापि नोत्थितः। अहमेव पापकारिणी वंश-प्ररोहमिममादाय कथंचिद्दुरतिक्रमं कालं कलयामि। किं किं न कारयति दारिद्र्यम्? बाल्यादेव मुकुल इव कोमलाङ्ग एष एव कथंकथमप्यवस्करेभ्यः प्रयोज्यवस्तूनि समाहृत्य तद्विक्रयप्राप्ताल्पद्रव्यैर्द्वयोरप्युदरपूर्तिं करोति। अधुना भवत्कृपां प्राप्य तुष्टाऽस्मि।"

अहं तु बालं तं बारम्बारं निर्वर्ण्य मनसि– "अहो दुर्निवारता व्यसनो-पनिपातानाम्। अचिन्त्या हि गतिर्दैवस्य!! न जाने जगति कियन्तो जन्तवः सहन्ते घातेषु घाताः!!" इति विचिन्त्य प्रकटतया वृद्धाशातन्तुमिव तं बालं सस्नेहमपृच्छम्– " वत्स, पठितुमिच्छसि?" मौन एव स स्वीकृतिसूचकेन शिरःकम्पेन पठनेच्छां व्याजहार।

तस्मादेव क्षणात्स आवयोः कृतकतनयः संवृत्तः। मया 'मुकुल' इति नामकरणेन सहैव तेन द्विजत्वमवाप्तम्। तत आरभ्य मनोयोगेनाध्ययनं कुर्वता मुकुलेन पुत्रत्वं प्रमाणीकृतम्। गच्छति काले, विशिष्टयोग्यतया परीक्षा-मुत्तीर्य तेन स्नातकोपाधिर्लब्धः। पुनः शालाध्ययनं विहाय मयानुमतः स शासनाद् वित्तानुदानं गृहीत्वा यन्त्रशालामेकां स्थापितवान्। एतस्मिन्नन्तरे प्रायेणाष्टादशवर्षावधेः पश्चात् स्थानान्तरणं मेऽन्यत्राभूत्। कमपि कालं यावत्पत्रसम्बन्ध आसीत् किन्तु शनैश्शनैः सोऽप्यवरितः। अहमपि कुटुम्ब-विस्तारेण जगत्प्रपञ्चव्यापृतः कालप्रभावेण तत्सर्वं विस्मृतवान् किन्तु

ह्योऽतर्कितरूपेण तमेव मुकुलं तादृशं विलोक्य तत्सर्वं पुनः स्मृतिपथमायातम्। तस्यैश्वर्यं नगरपरिवर्तनञ्च प्रति वर्तते ममापि काचिज्जिज्ञासा। नूनं हि जगंदिदं विचित्रवृत्तानामाकरमिति ॥

**पुरुषार्थं समाश्रित्य किं न कुर्वन्ति प्राणिनः।**
**मुकुलस्य दशाचक्रं पुरुषार्थगतं फलम् ॥**
**यः पठेद्धि दशाचक्रं प्रभुणा निर्मितां कथाम्।**
**नियतिं दुस्तरां तीर्त्वा सुखमक्षयमश्नुते ॥**

## ॥ यदा विबोधस्तदा विभातम् ॥

अस्ति वाराणस्यां 'मैदागिन' इति चतुष्पथस्योत्तरपूर्वकोणेऽवस्थितमेकं सुरम्यं सकलजीवलोकहृदयानन्ददायकं नगरजनाकीर्णं प्राचीनमप्यजीर्णं दीर्घायतं प्राकारप्रकरगतमुद्यानम्। विस्तारशोभासम्पन्नमिदमुपवनं सघनस्निग्धच्छाया-तरुततिभिस्सततं समाच्छादितं शोभते। अस्य हृद्देशे विमलपयःपूरं सरः समीरणोद्वेलितलोलकल्लोलं लोलयति मनांसि प्रेक्षकाणाम्। जनमनोहारिणी सरणिः सरः परितः प्रसरति यामुभयतो विलसन्ति विततविकचसुमनोभर-भारावनतपादपवीथयः। राजिकासु राजन्ते राजयः सकलर्तुप्रसवप्रसूनानाम्। मधुपानमत्तमधुपगुञ्जितेषु सुरभिसंवलितललितकलितलताकुञ्जेषु विहरन्ति विविधाः जनाः। लोभाकृष्टमना जनाः स्वास्थ्यलाभायैतत्सेवन्ते। इदमुद्यान-मादिवसं स्वोपभोगाय मौनमपि जनानामन्त्रयति। महत्सम्मर्दरवाकुलेऽस्मिन् महानगरे निवसन्तो जना आबालवृद्धा निर्धनसमृद्धाः सर्वेऽत्रागत्य मनःप्रसादं विश्रान्तिं च लभन्ते। केचन हरितशाद्वलमयेषु स्थण्डिलेषु केचन सञ्चरण-पथपार्श्वनिर्मितपट्टिकासु, केचन सरोवरस्वच्छसोपानेषु समुपविशन्ति। बालकाः, क्वचित्करकन्दुकैः सङ्क्रीडन्ते, क्वचित्पुष्पोपविष्टान् चित्रपतङ्गान् ग्रहीतुं धावन्ति, क्वचिद् गगनगतं विहङ्गमं पश्यन्ति, क्वचित्प्लवन्तं प्लवङ्गं दृष्ट्वोल्लसन्ति। केचन मौनं भ्रमन्ति। केचन मधुरालापैः कालं नयन्ति। सर्वेऽपि यथाभिरतं विहरन्ति। उपवनमिदं पुष्पहासं प्रकृतेरमन्दमुल्लासं समागतेभ्यः सर्वेभ्यो वितरति।

स्मरामि तत्रोद्याने स्वीयं भ्रमणम्। तदा तत्समीपस्थ एकस्मिन् महाविद्यालये पठामि स्म। मित्रैस्सह गत्वा यथासुखं विहृत्य पुनरावर्तनमिति प्रतिदिनस्य क्रम आसीत्। तत्रोद्याने सरो नैकवारं प्रदक्षिणीकृत्य वयं सोपनेभ्यो-ऽवतीर्योपजलमुपविशामः। निर्मलजलराशौ मत्स्यकुलान् वीक्ष्य महान् मोदो जायते स्म। केचन धर्मपरायणास्तान् पिष्टगुलिकाः भोजयन्ति स्म। मत्स्यानां लोलायितं क्षिप्रसर्पणं समुत्सुकानां जनानां मनांसि रञ्जयति। जलादुत्प्लुत्य पुनर्जले लीनाः बालमीनाः कस्य चित्तं न चमत्कुर्वन्ति?

अस्मिन्नेव क्रमे कदाचिदस्माभिरदृष्टपूर्वमेकं दृश्यं नयनगोचरीकृतम्। व्यतीतेऽपि कालेऽद्यापि घटनां तां तथैव स्मरामि। यो जनो वृत्तस्यास्य नायकः, आसीत्तस्य देहयष्टिर्विधातुः कापि विचित्रा सृष्टिः। अस्थिपञ्जरे चर्माऽऽवेष्ट्य यदि काप्याकृतिः सञ्चरेत तदा सा तेन पुरुषेणोपमीयते। स पुरुषो यान्त्रिकीं द्विचक्रिकामारुह्य तमुपवनं प्रविश्य यानमुद्यानस्य वीथिकायामेकस्मिन् पार्श्वे स्थापयामास। अहो दुरवस्था तस्य जीर्णयानस्य! मन्येऽयं जनः केवलमारोहणं जानाति, न तस्य परिरक्षणम्। यतो हि यानं प्रचालिते सति महान्तं धूमोद्गारं वमति। यादृशः स पुरुषः परिलक्ष्यतेस्म तादृशमेव तस्य यानम्। एकतस्तं सज्जनमपरतस्तस्य यानं दर्शं दर्शं विस्मितानामपि स्मितानां सर्वेषां हासः प्रस्फुटितः। यथा हि, कृशकायस्य तस्योदरं शरीरात्पृथगेव स्वीयां सत्तां सूचयति स्म। पलितकेशः, शुक्तिखलितः, चिपिटनासिको, गह्वरीभूतगोलकनिमग्ननयनः, क्षामकपोलस्ताम्बूलरागरञ्जितस्थूलौष्ठो विवृतवदनाऽऽलक्ष्यभग्नरदनः स्पष्टग्रन्थि-खदिरखण्डलगुडग्रीवः तिक्तालावुतुन्दिलो विषमपादः प्रायेण पञ्चाशद्वर्षीयः स पुरुषो यानवाराङ्गलम्बितं चर्मप्रसेवमपकृष्य करे कृत्वा, यानं तालकेन निरुद्ध्य, किमप्यस्फुटं गुणगुणायमानो मन्दं मन्दं पदं विन्यस्येतस्ततो दृष्टिनिक्षेपं कुर्वन् सरो गत्वा, सोपानेभ्योऽवक्रम्यान्तिमे सोपान उपाविशत्। पद्भ्यामुपानहौ पृथक्कृत्य पादौ जले सन्निवेश्य सुस्थितः। ततश्च प्रथमं भूशिम्बिकामत्तुमारेभे।

एकैकां कराङ्गुलीभिः विदार्य सारभागं मुखे त्वचश्च जले निक्षिपति स्म। निश्शेषां भुक्त्वा प्रसेवादुद्धृत्य कदलीफलानि करेऽकरोत्। त्रीणि फलान्युदरे प्रापयित्वा तेषामपि त्वचो जले तेन विसृष्टाः।

तथा कुर्वन्तं तमवलोक्य, 'किमयमेवं प्रतिदिनं करोती' ति नूनमनेन सरोजलं प्रदूषितं भविष्यतीति मया चिन्तितम्। तदानीं समागतेनोद्यानपालेन, तत्रोप-विष्टैरन्यैरपि जनैरस्माभिश्च स तद्दुष्कर्मणे बहुधा धिक्कृतः। किन्तु तस्याकार-चेष्टितैरिदमेव प्रतिभाति स्म यदयं चिक्कणो घटः।

तस्मिन् काले सरसि जलस्योपरितले मीनसमवायः प्रादुरासीत्। तेष्वेको मत्स्यस्तं दुष्टकर्माणमालक्ष्याऽब्रवीत्– "अयं पुरुषो दुरात्मा, कुचेष्टो मलिन-बुद्धिश्च।" अन्ये सर्वेऽपि मत्स्याः समर्थयामासुः "सत्यं ब्रवीषि। नराधमोऽयं

मनुष्यजातिं कलुषयति । नित्यमेवात्रागत्यैवमेव त्वगादीनि विसृज्य सरो जलं प्रदूषयति । एतान्युत्सृष्टानि त्वगादीनि गलितानि पूतेऽस्मिन् जले महतीं पूतिमुत्पादयन्ति । विकृते पूतिगन्धिजलेऽस्माकं जीवनं सङ्कटापन्नं जातमस्ति । अस्येदं निरन्तरं निरन्तरकर्मास्माकं श्वसनमपि कृच्छ्रसाध्यं करोति । अनेन दुष्कृतेनास्य किं सुखमुत्पद्यते ?''

ततः कोऽपि मीनः खिन्नमना दुःखेनोवाच— '' ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे' इति निगदितमेव । भवतु, दण्ड्याय दण्डं न्याय्यम् । अपि चात्मरक्षायै कश्चिदुपायश्चिन्तनीयः । अस्त्युपायो येनास्येयं नित्यप्रवृत्तिः शममेष्यति । वयमपि बाधामुक्ता भविष्यामः ।''

सर्वे मीनाः सोत्कठं सहैव प्रोचुः— '' ब्रूहि, ब्रूहि तमुपायम् ।''

स सोत्साहं प्रोवाच— '' श्रूयताम् । अयं जनो जले पादौ निमज्य तिष्ठति । आगच्छन्तु, सर्वे मिलित्वाऽस्य पादयोराक्रम्य, प्रहृत्य; तत्र व्रणं विधाय तं भयाक्रान्तं कुर्वन्तु येन स पुनस्सरस्तीरं द्रष्टुमपि मनो न कुर्यादत्रागमनस्य कथैव का? अस्मिन्नभियाने सरोवर्तिनः कच्छपा अपि साहाय्यं विधास्यन्ति ।'' एवं मन्त्रयित्वा तथा कृते सति, यादसां प्रहारैः भृशमाकुलः स जलात्पादौ निस्सार्य पलायनपरो बभूव । गत्वा चैकस्मिन् लताकुञ्जे तस्थौ । तस्य दर्शनमात्रेण सर्वासु पुष्पस्तवकावनम्रासु निकुञ्जवल्लरीषु वेपथुराविवेश । सोऽपि महात्मा क्षणं विरम्य, ईषन्निःश्वस्य श्वेतधूमवीटिकामग्निमुखीं कृत्वा धूमपानं कर्तुमारब्धवान् । तस्य मलिनमुखान्निर्गता विषाक्तधूमोद्गाराः वायुसम्पृक्ताः लतानां श्वासबाधामकुर्वन् । ताः निकुञ्जाश्रिता वल्लर्यस्तस्यानेन दुश्चेष्टितेन संत्रस्ताः पीडाकुला जाताः । किन्त्वयं नरो नाम जीवोऽविचलितभावस्तथैव धूमवलयानुद्वमन् सानन्दं धूमवीटिकामास्वादयति स्म ।

अथ ताः लताः समीपस्थं सुदीर्घविस्तारसम्पन्नमभ्रंलिहं प्रौढमेकं वृक्षमार्त्तस्वरेण प्रोचुः— ''तात, पश्यैनं नराधमं योऽकारणमेवास्माकं प्राणान् संशयग्रस्तान् करोति । वयं सङ्कटापन्नाः । अयमिदानीमपि धूमपानान्न विरमति । अस्ति कोऽप्युपायोऽस्मात्त्राणस्य ? उपदिशतु येन विधिनाऽस्माकं कल्याणं सम्पत्स्यते शिक्षाञ्चायमवाप्नोतु ।''

ईषद्विहस्यापि स वृक्षो गम्भीरमुद्रया प्रोवाच – "एतादृशाः वस्तुतः करुणापात्राणि सन्ति। ते जडबुद्धयो जानन्तोऽपि नैव जानन्ति यद् वनस्पतयोऽपि प्राणिन एव। ते जङ्गमा वयं स्थावरा इति केवलमन्तरम्। मनुपुत्रास्ते मनूपदिष्टां श्रुतिं न स्मरन्ति – "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः।" एते स्वार्थपरा नरा लोभसिद्धयेऽस्मान् प्रति कं कमत्याचारं न कुर्वन्ति? वयं मूकाः सर्वं सहामहे। अस्माकमुत्पीडनं कुर्वन्त एते तस्य मूर्खस्यौपम्यं भजन्ते यो यामाश्रयते स्म तामेव शाखां छिनत्ति स्म। अत एते वनस्पतीनामुच्छेदपीडनं कुर्वन्तः स्वजीवनहानिमेव कुर्वन्ति। भवतु, नायं शोककालः। साम्प्रतं भवत्यः सर्वा एवैनं दण्डयितुमात्मत्राणञ्च विधातुं स्वाधीनोपायाः सन्ति। अचिरमेवायं कुञ्जस्निग्धच्छायाप्रभावेण प्रगाढनिद्रावेशविवशो भूत्वा सुप्तो भविष्यति। शृण्वन्तु तस्य घर्घरायमाणां नासिकां निवध्नन्तु निबिडं तं दृढलतातन्तुपाशैः। अनेनोपायेन स स्वयमेव सिद्धो भविष्यति।"

अनुभवसमृद्धेन वृक्षवृद्धेनोपदिष्ट उपायः सुकर इति मत्वा लतास्तास्तस्य प्रसुप्तिं प्रतीक्षमाणास्तस्थुः। यदा प्रगाढनिद्रानिमग्नस्य तस्य नासिका घर्घरघोषवती बभूव तदैव सहसा समुपेत्य लताभिः स सुदृढो निगडितः। अकस्मात् कोऽयं वज्रपात इति ससम्भ्रमं यावन्नेत्रमुन्मीलयति तावदात्मानं लतापाशैर्निविडं निबद्धं पश्यति। केनेदमतर्कितमविश्वसनीयं कर्म कृतमिति तस्य कौतुकस्य सीमैव नासीत्। सोऽङ्गसञ्चालनमपि कर्तुं न शशाक। तस्य तां दुर्दशां निरीक्ष्य वृक्षो लताश्च हास्यनिर्भरतां जग्मुः। ततस्तस्य श्रुतिपथे पदसमूहोऽयं पदं न्यधात् – " रे दुष्ट, धूमपानेनास्मानुद्वेजयसि! न जानासि, वयमपि प्राणवन्तः। येन त्वं सुखं दुःखं चानुभवसि तेनैव वयमपि। त्वमपराधकारी, दण्डमर्हस्येव। अतो दुर्दशामेतां नीतोऽसि। यदि त्वं स्वकृतमपराधमङ्गीकृत्य तस्मादात्मानमपाकर्तुं शपथेन वचनं करिष्यसि तदैव तव मुक्तिर्नान्यथेति।"

वल्लरीपाशग्रथितो व्यथितो नरः स आर्त्तस्वरेण प्रार्थयामास – " मुञ्चन्तु माम्। करिष्ये तव वचनम्।" बन्धनगतं तं त्रिधा वचनबद्धं विधाय वल्लरीभिः पाशः शिथिलीकृतः। पीडितोऽपि समाश्वस्तः स ततो दृष्टिमवनम्य

गन्तुमियेष । किन्तु लताभिस्तस्मै मार्गस्तावन्न दत्तो यावत्तेन दोर्भ्यां कर्णविधृतिपूर्वकं धूमपानापराधस्य पुनरावृत्तिर्न निषिद्धा ।

एवं लताभिर्दण्डितः पश्चाच्च विमुक्तः स घटितं सर्वं संस्मृत्यापमानव्रीडया नतग्रीवो निजयान्त्रिकद्विचक्रिकान्तिकमुपगम्य चर्मप्रसेवमवलम्ब्य यावत्तालकमुद्घाटयति तावत्कपिरेकस्तस्य प्रसेवं सहसाऽऽक्रम्यादाय चोत्प्लुत्य तरुशिखरमारुरोह । एतद्विलोक्य बालकाः करपुटं वादयन्तो हास्यभराः बभूवुः । बहुभिर्याचनाप्रकारैर्यदा स प्लवङ्गात्प्रसेवमवाप्तुं न शशाक तदैकं प्रस्तरखण्डमादाय वानरमालक्ष्योत्क्षेपयामास । लक्ष्यभ्रष्टं तदुपलशकलं तरुशाखावलम्बितं मधुकोशमभिघातवान् । प्रस्तरखण्डसङ्घट्टेनोद्वेजिताः मधुमक्षिकाः सवेगं सरवं निपतितास्तं जनमाच्छाद्य दंष्टुमारब्धवन्तः । सरोषाणां सरघानां दंशैर्जातव्रणपीडया सोद्वेगाकुलितः स आत्मरक्षणायेतस्ततः धावन्नपि न क्वचित्त्राणमवाप ।

एतस्मिन्नेवान्तरे कुतश्चित्समागतः परहितव्रतः सकललोककल्याणरतः कोऽपि विमलमतिर्जटिलो यतिः सत्वरं तमुपसृत्य स्वीयेन कम्बलेनाच्छाद्य तावत्तस्थौ यावत्ताः सरघाः शमितमन्यवस्तं विमुच्य मधुकोशे समाहिताः । 'गताः सरघा' इति जननिनदितं श्रुत्वा यतिः कम्बलमपावृणोत् । ततश्च विदितवृत्तः स यतिः सकरुणं विलोक्य तमुपदिष्टवान् – "वत्स, वयसा परिणतोऽपि त्वं विवेकमूढः प्रतिभासि । यदि सत्यमेव सुखं वाञ्छसि, सर्वभूतहितो भव । मनसा, वचसा, कर्मणापि कस्यचिद्हानिं मा कुरु । अधुना मानवजीवनाय पर्यावरणसंरक्षणमनिवार्यमेव । पर्यावरणं मा प्रदूषय । प्राचीनैर्मनीषिभिरर्वाचीनैश्च विचारशीलैः लोकोपकारपरायणैस्सज्जनैः पर्यावरणसंरक्षणाय नैकविधा उपायाः सङ्कल्पिताः । पर्यावरणप्रदूषणेनात्महानिर्ग्लानिश्च भवतः । अतः कदापि दुश्चेष्टितं कृत्वा प्रकृतेः कोपभाजनं मा भव । पश्य, शास्त्राण्युपदिशन्ति-' अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।' एतत्त्वयाऽद्य साक्षादेवानुभूतम् ।"

यतिवरस्यैतद्वचनामृतं श्रोत्रपेयं निपीय जातपश्चात्तापभावः प्रायश्चित्तं कर्तुमना स पुरुषस्तस्य महात्मनः पादयोर्निपत्य तदुपदेशं शिरसा जग्राह ।

यतिवरेण सह सर्वे जनाः सहर्षं प्रोचुः–"अस्येदं नूतनं जीवनम्। अवितथा खल्वियमुक्तिः – "यदा विबोधस्तदा विभातमि'ति ॥"

**पर्यावरणरक्षायै कल्पितेयं कथा नवा।**

**श्रद्धया यः पठत्येतां सर्वबन्धात्प्रमुच्यते ॥१॥**

**दूषणं नैव कर्तव्यं क्वचित्कस्यापि वस्तुनः।**

**संरक्षणं सदा कार्यं सर्वभूतहितेच्छया ॥२॥**

●

# ॥ नेत्रोन्मीलनम् ॥

"तात, कुत्रास्माकं ग्रामः ? कदा तं द्रक्ष्यामि ? वयं तत्र कदा गमिष्यामः ?" – प्रशान्तः सोद्वेगं पृष्टवान्।

"वत्स, पूर्वमपि मया बहुधा कथितं, सुदूरमस्माकं ग्रामः। अधीरतया मा भाव्यम्। अवश्यमेव नेष्यामि। किन्तु ग्रामं गत्वा किं करिष्यसि ? तत्र नास्ति किञ्चिज्जीवनसौविध्यम्।" – प्रोवाच प्रशान्तस्य पिता प्रमोदः।

"किं करिष्यामीति तु तत्र गत्वैव ज्ञास्यसि। कदा नेष्यसि ?" – प्रशान्तः पुनरपि पप्रच्छ।

"भवतु, नेष्यामि दुर्गापूजाऽवकाशे। तदानीं दिवसा अपि सुखदरमणीया भवन्ति। अवकाशोऽपि दीर्घकालिकः।" – प्रियात्मजमाश्वासयामास प्रमोदः।

अस्मिन्नेव वर्षे कतिपयैरेव मासैः स निजं पैतृकं ग्रामं स्वचक्षुषा द्रक्ष्यतीति प्रशान्तस्य मनसि महत्कौतुकोल्लासो ललास। स दशमकक्षायां पठति किन्तु स्वीयो ग्रामस्तेनाऽऽजन्मनो न दृष्टः। पुस्तकेषु ग्रामवर्णनं नूनमेव बहुधा पठितम्। अपि सर्वे ग्रामास्तादृशा एव ? अथवाऽलं कुतूहलेन। किञ्चित्कालानन्तरं स्वपित्रा सह गत्वा स्वयमेव द्रक्ष्यति।

प्रशान्तस्य माता स्मितमुखी पितृपुत्रयोः संवादं श्रुत्वा प्रीतेः परां कोटिं जगाम। कदाऽऽगमिष्यति तद्दिनम् ? भवतु नाम होरामात्रमेव, सा पितृगृहं गमिष्यत्येव। अहो, व्यतीतानि सप्तदशवर्षाणि, पत्रलेखैरेव पितृगृहवार्ता ज्ञायते। तत्रत्यः खगात्मजोऽपि न दृष्टस्तावत्। प्राप्तमासीदनुजोद्वाहामन्त्रणं किन्त्वस्मै नावकाशः प्राप्तः। वर्धापनं रे प्रशान्त, त्वत्कारणादेवायं सुयोगः सम्प्राप्तः।

ग्रामगमनाय पुत्रं प्रतिश्रुत्य प्रमोदश्चिन्तापरो जातः। सभार्यस्य तस्य लघुकुटुम्बे पुत्रः प्रशान्तः पुत्री च शान्ता नाम्नी। ग्रामं गत्वा स किं करिष्यति।

तस्य दौर्भाग्याज्जननी शैशव एव दिवङ्गता । पिता त्वस्मिन्नेव नगरे वृत्तिपोषणपरः कार्यपालनकाले दुर्घटितेन प्राणान् तत्याज । तदानीं स पितृपादमूले निवसन् स्नातककक्षायां पठति स्म । दुर्घटितसूचनामधिगत्य ग्रामात् पितृव्य आगत आसीत् । साश्रुनयनः स दुर्दैवहतं मां गृहं नेतुं वाञ्छति स्म । किन्त्वत्रत्यैः पितृसुहृद्भिस्तस्मिन्नेव कार्यालये पितृपर्यायरूपेण मम नियुक्तिस्साधिता लिपिक-पदे । यथाकथञ्चित्स्नातकपरीक्षामुत्तीर्याऽध्ययनाद्विरक्तोऽभवम् । तद्वर्षं व्यतीत्य पितृव्यः पुनरायातः । तेन सह मम श्वसुरोऽप्यासीत् । तौ मां प्रबोध्य ग्रामं नीतवन्तौ । पूज्यपितृपादः स्वजीवनकाल एव मम विवाहं सम्पादितवान् । अत एकदा शुभतिथौ परिमितैः कुटुम्बिजनैः सह गत्वा भार्यां वधूं स्वगृहं नीतवान् । भार्यया सहैहागतः पुनर्न कदापि गतवान् ग्रामम् । अयं प्रशान्तो ग्रामं गन्तुं बहुधा निर्बन्धं करोति । अद्य मया तस्मै वचनं प्रदत्तम् । किन्तु मह्यं न रोचते ग्रामगमनम् । तत्र जराजीर्णः पितृव्यस्तस्य च दुर्ललिताः कापटिकाः पुत्राः सकुटुम्बं मां ग्रामगतं दृष्ट्वा वज्रनिपातहतास्ते न जाने कथं व्यवहरिष्यंति ! ते तु वराकमराज्यं पितृव्यमेव भृशं पीडयन्ति, का कथा तस्य सेवायाः ? यद्यपि तत्र गृहक्षेत्रवाटिकादि सम्पत्तौ ममांशोऽस्त्येव किन्तु ते सूचिकाग्रमपि न दास्यन्तीत्यहं मन्ये । तर्कयामि, तैः शासनाभिलेखेषु मदीयं नामापाकृत्य स्वानि नामानि कारितानि स्युः । का दशा तत्रेदानीमित्यपि ज्ञातुं न शक्नोमि । भवतु, जन्मभूमिस्तु गन्तव्यैव ।

कालस्तु पक्षमिवारोप्य धावति स्म । मासत्रयावधिः कथं व्यतीतो निमेष मात्रमिवेति सर्वे विस्मिता आसन् । सम्प्राप्तो दुर्गापूजावकाशः । ग्रामगमनोत्सुकतया सर्वेषां मनांसि हर्षनिर्भराणि जातानि । प्रमोदस्याप्यन्तःकरणं किञ्चित्सा-शङ्कमप्युत्फुल्लमासीत् । अमन्दानन्दान्दोलनैर्नितान्तोत्साहसंवलनैर्मुहुर्मुहुः प्रशान्तोऽ-पूर्वां कामप्युत्कण्ठां भजते स्म । तस्मै परश्वोऽद्यैव संवृत्तः । तस्य दशा त्वनिर्वचनीयाऽऽसीत् । बारम्बारं स्वपितरं पृच्छति – "ग्रामे मम गृहं कस्यां दिशि क्व वाऽस्ति ? तत्र मम कुटुम्बे के के सन्ति ? भवति ग्रामे विद्यालयो न वेति ? ग्रामबालकाः किं कुर्वन्ति ? अपि च, किं सत्यमेव ग्रामे दुग्धदधिकुल्या प्रवहति ?" एवमन्येऽपि बहवः प्रश्नाः तस्याऽसन् । किं कथयामि, तस्य समुल्लासयुतायाः जिज्ञासायाः सीमैव नासीत् ।

अथ समागता प्रस्थानवेला। रेलयाने पूर्वारक्षितशायिकाधिरूढास्ते ग्रामदेशं प्रत्युन्मुखा विविधविचारवीथीविहाररता, मनोमोदकान्यास्वादयन्तः, सहयात्रिणां वार्तालपैः कालं नयन्तो यात्रागतानि सुखदुःखानि समनुभवन्तः सावधानमनसा सुस्थितिं विधाय भगवन्तं भवानीपतिं प्रार्थयामासुः यात्रां मङ्गलमयीम्। प्रशान्तस्य शान्तायाश्चेयं प्रथमा रेलयात्राऽऽसीत्। द्वावपि यावद्दिनं गवाक्षे मुखं निधाय मार्गदृश्यानि द्रष्टुमेव यत्नवन्तावास्ताम्। किमप्यपूर्वं विलक्षणं वा मनोरममाश्चर्यदं दृश्यमवलोक्य परस्परं महतोत्साहेन सम्बोध्य दर्शयतः – "पश्य-पश्य, रेलयानरवेण भीतेयमजापंक्तिस्तीव्रं पलायिता ? अरे, रेलपथसन्निकटैव गावोऽनुद्विग्नाश्चरन्ति। पश्य, पर्वतोऽयं गजाकारो दृश्यते। भोः, गहनेयं वनालिः ! अहा, कथं निर्झरनीरं समुच्छलति !! ग्रावाद् ग्रावेषु स्खलितपतितैः जलशीकरैः पर्वतश्रियोऽवगुण्ठनाय धवलदुग्धदुकूलमिव वितनोति। पश्य, नयनाभिरामा एते चित्रवर्णपिच्छा मयूरा स्वैरं विहरन्ति श्रुत्वा च रेलयानध्वनिं मेघगर्जनभ्रान्तिलुब्धा केकारवं कुर्वन्ति। अरे, महिषीपृष्ठमारूढः स पशुचारको बालः कथं रेलयात्रिणोऽभिलक्ष्य कायक्रीडा-निकायं दर्शयति। सुन्दरमतिसुन्दरम्, विकसितसितशतदलपुष्पैराच्छादितमिदं सरो हसतीव विभाति। अहा, विपक्वशालिप्रसवान् चञ्चुभिरादाय प्रहर्षितेयं चारुसा-रससरणिर्वातावधूता ग्रथिता श्वेतकुसुममालेव शीघ्रवेगा नभः समाक्रामति। अये, दूरतः समाश्लिष्टा तरुवीथी नातिचिरमिव विभक्ता विराजते। रेलयानवेगप्रभावेण यद्दूरं तिष्ठति तच्छीघ्रमेव नैकट्यं भजते, यत्तु निकटं तद्दूरमपयाति। एवमेव दृश्यदर्शनलोभाकृष्टमानसौ तौ क्षुत्पिपासे अपि विस्मृतवन्तौ।

अथ दिनद्वयपर्यन्तामविरतां रेलयात्रां विधाय तत्कुटुम्बकमेकस्मिन् जान-पदीये लघुनगरे समायातः। अतः परं बसयानेन गन्तव्यमासीत्। बसयानेन प्रस्थितास्ते दिनस्योत्तरार्धे राजमार्गे एवैकस्मिन् स्थाने प्राप्ता यतः स ग्रामः क्रोश-मात्रं परिलक्ष्यते। समागच्छेत्कापि वृषभशकटीति कियत्कालं प्रतीक्ष्य विश्रम्य च प्रमोदः पदातिरेव गमनं करणीयमिति सर्वान् नोदयामास। "नातिदूरं दृश्यते स ग्रामो ममे" ति पेटिकामुत्थाय प्रचलितवान् प्रमोदः। भार्याऽपि तमनुससार। द्वावपि

बालौ तूत्साहातिरेकेणाग्रेऽग्रे धावन्तौ तथाऽगच्छतां यथा समुद्रलङ्घनाय महावीरः पवनपुत्रो ययौ। अन्ततश्चत्वारस्ते जनाः स्वगृहं प्राप्य द्वारे तस्थुः।

सकुटुम्बकः कोऽयं समागतोऽभिनवो जन इति समुत्सुकाः कुतूहलिनो ग्रामजनाः शनैश्शनैः प्रमोदस्य ग्रामप्रवेशकालादेव तमनुसरन्तः समाजग्मुः।ग्रामसिंहैर्न केवलं बुक्कारवैस्तेषां स्वागतं व्याहृतमपितु समग्रो ग्रामः सूचितः। समागतं प्रमोदकुटुम्बं तु ग्रामबालकानां कृते सर्वथाऽपरिचितमेव।

स्वीये द्वारे जनसम्मर्दं परिलक्ष्य वृद्धः लगुडमवलम्ब्य कासघर्घर-ध्वनिना पृच्छन्, जराक्लिष्टदृष्ट्या निभालयन् मन्दं-मन्दं समागत्य तानपरिचितान् जनानुपतस्थौ ! स्वपितृव्यं सम्मुखं वीक्ष्य प्रमोदश्चरणावुपस्पृश्य स्वनाम जग्राह। "अहो प्रमोद ! काञ्चित् सूचनां विनैव !!" जरादैन्योपबृंहितहर्षखेदामिश्राश्रुचक्षुस्तं दोर्भ्यामालिङ्ग्य पितृव्यश्चिरं तस्थौ। "कथं रे, सर्वथा परित्यक्तस्तेऽयं पितृव्यः सहसा स्मृतिपथमायातः ?" कातरोपालम्भनैर्लज्जितः प्रमोदः शिरोऽवनम्य किञ्चि-दपि वक्तुं न शशाक। ततो वधूः, प्रशान्तश्शान्ता च क्रमेण वृद्धस्य चरणयोः प्रणम्याशीर्वादान् लेभिरे। या गृहस्त्रियः द्वारकपाटपार्श्वे स्थिता गृहान्तर्वर्तिन्योऽ-वगुण्ठनवत्यो विस्मयमानमानसा बद्धदृष्टय आसन् ताः क्षणादेव सर्वमवगम्य बहिश्चागत्य तां गृहलक्ष्मीं प्रमोदभार्यां सादरं सविनयं मङ्गलविधिना गृहाभ्यन्तरं नीतवत्यः। वृद्धः प्रशान्तं शान्तां च निजपार्श्वयोः कृत्वा ग्रामजनैस्सह प्रमोदस्य परिचयं कारयामास। यथायोग्यमभिवादनं विधाय प्रतिगृह्य च प्रमोदः समुप-स्थितान् ग्रामजनान् सभाजयामास। श्रुतसमायाताः पितृव्यजा अपि परमप्रेम्णा प्रमोदं प्रणम्य प्रीतिं विस्तारयामासुः। रात्रिभोजनानन्तरं सर्वे चैकत्रावस्थिताः सुखदुःखादिवार्ताभिः सुचिरं मनोविनोदनं चक्रुः। कुटुम्बिजनानामारम्भिकैर्व्यवहारैः प्रमोदस्याशङ्का निर्मूलैव सिद्धा। यात्राश्रान्तः स जातनिद्रः सुष्वाप। यः प्रमोदः तेषां व्यवहारं निपुणं निरीक्ष्य कानिचिदेव दिनानि तत्र स्थास्यामीति मनःकृत्वाऽ-त्रागत आसीत् स एवैतेषां प्रीतिपाशे सुबद्धः सप्ताहद्वयपर्यन्तमुवास।

एतस्मिन्नन्तरे प्रशान्तेन तत्कृतं यत्कर्तुं समर्था वृद्धा अपि न प्रभवन्ति। उक्तं हि – "कृतानि पुत्रैरकृतानि पूर्वैः।" प्रशान्तस्य ग्रामव्यवहारं निपुणं निरीक्ष्य न कोऽपि वक्तुं शक्नोति यदयं बाल आज़न्म ग्रामे न वसति। अधुना सप्ताहावधावेव ग्रामस्याबालवृद्धाः सर्व एव जनाः प्रशान्तं जानन्ति स्निह्यन्ति मानयन्ति च। यतो हि सत्कर्तृत्वमेव सर्वेषां गौरवाय भवति।

प्रशान्तस्यायं ग्रामः प्रकृते क्रोडे विलसति। ग्रामात् कियन्मात्रमेव दूरं वनं, तन्मध्ये चैकः पर्वतकोऽस्ति। ग्राममुभयतश्छायावृक्षाणां फलवृक्षाणाञ्च सुविस्तार-शोभासम्पन्नमुपवनं विराजते। ग्रामान्नातिदूरमिवैका लघुतटिनी या स्वजलेनेमं ग्रामं पुष्णाति। नदीमातृकोऽयं ग्रामः। वर्षासु जलौघपूर्णेयं पयस्विनी विगते पयोदमण्डले कृच्छ्रतोया भवति। अतो हि ग्रामवासिनस्तत्र जलरोधाय वंशकाष्ठ-खण्डानि निचाय्य मृत्तिकासेतुं बध्नन्ति। एवमवरुद्धे प्रवाहे तत्र जलाशयो जायते यो ग्रीष्मकालेऽपि न शुष्यति। अनेनैव नदीजलेन ग्रामीणानामावश्यकतापूर्तिर्जायते। प्रशान्तः पश्यति यदस्मिन्नेव जलाशये रजको वस्त्राणि प्रक्षालयति। ग्रामीणाः स्नानं कुर्वन्ति, महिष्यादीन् पशूनपि स्नापयन्ति। ग्रामस्त्रियो गृहपात्राणि मार्जयन्ति। केचन त्विदमेव जलं गृहं नीत्वा पिबन्ति, भोजनपाकमप्यनेनैव निष्पादयन्ति। स्नानोत्तीर्णैः श्रद्धालुभिरेतज्जलं देवकार्येष्वपि प्रयुज्यते। अपि च, स साश्चर्यं पश्यति यदस्मिन्नेव सरिज्जलाशये न केवलं ग्रामावस्करः प्रवाह्यते, अपि तु ग्रामस्य मलिनजलप्रणाली पतति। अत्रैव च किञ्चिद्दूरमेकान्ते सरित्तटे शवदाहकृत्यमपि सम्पाद्यते। एतत्सर्वं दर्शं दर्शं प्रशान्तस्य मनसि महती क्षोभयुता ग्लानिर्जाता। ग्रामीणानामज्ञतामविवेकञ्चानुभूय तस्य चेतः सावसादं बभूव। तस्य दृष्टिपथे जर्जरा वनराजिः क्षीणञ्चोपवनमपि समापतितम्। ये वृक्षा वात्यादि-भिरुन्मूलिताः ग्रामीणैर्वा प्रयोजनवशाच्छिन्नास्तेषां स्थाने न पुनरारोपणमनुष्ठीयते, रिक्तभूमौ नवपादपानां रोपणं संवर्धनन्तु दूरमेवापास्तम्। ग्रामेऽपि गृहद्वारेषु निम्बादिच्छायावृक्षाणामभावो दृश्यते। अथ गृहे-गृहे समापतितानां रोगार्तानां रहस्यं प्रशान्तेन सुविज्ञातम्। तत्क्षणमेव स्मृतं तेन स्वविद्यालये समायोजितं पर्यावरण-विषयमधिकृत्य चित्रालेखप्रदर्शनम्। तत्राङ्कितेषु चित्रफलकेषु लेखपटलेषु,

पर्यावरणप्रदूषणेन का हानिः ? तत्संरक्षणेन को लाभः ? इति सुस्पष्टं प्रदर्शितमासीत् । पर्यावरणसंरक्षणोपाया अपि तत्र निर्दिष्टा आसन् । मनःसङ्कल्पितं तमनुभवमद्य ग्रामीणानां पुरतः समुपस्थातुं महते हितायेति विनिश्चित्य स ग्रामप्रमुखं प्रति ययौ ।

तस्य समक्षं सर्वमनुभूतं निर्वर्ण्य प्रोवाच – ''ग्रामजनानां पुरत एतत्सर्वमुपस्थातुमिच्छामि । अद्यैव सायङ्काले तानाबालवृद्धान् नरनारीजनान् समाकर्ण्य सभामेकामायोजयतु भवानिति ।'' प्रशान्तस्यायमनुरोधो ग्रामप्रमुखेण सडिण्डिमघोषं निखिले ग्रामे द्वाराद्द्वारं प्रसारितः । सायङ्काले ग्रामप्रमुखस्य द्वारे समवेतानां ग्रामीणानां समक्षं प्रशान्तः प्रभावकारिशब्दैः ग्रामदशां तत्कारणञ्च निरूपयामास –

''मान्याः प्रियाश्च स्वजनाः! अत्र ग्रामे ममागमनं तु प्रथममेव । नगरे जातः परिवर्धितश्चास्मि । ग्रामजीवनं मत्कृते सर्वथा नूत्नमेव । अत्रागत्य मनः प्रसादेन सममेव मनःखेदोऽपि मयाऽवाप्तः । इयं प्रकृतिर्या सर्वत्र विराजते साऽस्माकं जीवनदात्री धात्री च । अधुना पर्यावरणमित्यस्याः कलेवरमेवोच्यते । निर्दुष्टं विशुद्धं पर्यावरणमस्माकं जीवनाय सुखं सौख्यं च वितरति । तदेव दूषितं भूत्वा नानाविधान् रोगान् प्रयच्छति विविधाश्च समस्याः समुत्पादयति । अतः पर्यावरणप्रदूषणं कथञ्चिदपि नैव कार्यम् । सर्वतोभावेन तस्य संरक्षणमेव करणीयम् । तदेव महते श्रेयसे कल्पते । स्वस्थं निर्बाधं जीवनं प्रसादमयमवाप्तुं प्रसादयन्तु प्रकृतिं प्रसाधयन्तु प्रकृतिम् । प्रसन्ना प्रसाधिता सा नूनमेव किमप्यनिर्वचनीयममृतं वर्षति । अन्यथा त्वमृतमपि विषायते । अतस्तादृक् किमपि न कर्तव्यं येन पर्यावरणसन्तुलनं नश्येत् । पश्यन्त्विमां प्रवाहमयीं नदीं या भवद्भिः स्वार्थलोभान्निरुद्धा । भवन्तः तस्यां यद्यत्कुर्वन्ति तत्तत्सर्वं प्रवाहमये सलिले कथञ्चित्समीचीनं किन्तु बन्धबाधिते स्थिरे जलाशये कथमपि नोचितम् । यदि भवन्तः तज्जले स्नातुमिच्छन्ति, तस्याः जलस्य पानं पशून् कारयितुं वाञ्छन्ति, तदा प्रयत्नतः तज्जलं निर्मलं संरक्षणीयम् । तस्मिन् जले वस्त्राणि मा प्रक्षालयन्तु, पशून् मा स्नापयन्तु । तत्र ग्रामावस्करं मा क्षिपन्तु, मलिनजलप्रणालीं मा पातयन्तु ।

शवदाहमपि मा कुर्वन्तु। अहो बत महत्कष्टकरं यद् भवन्तोऽविवेकतया सर्वमप्येतत्कृत्वापि तत्र स्नानं कुर्वन्ति, तज्जलं पिबन्ति देवांश्चाभिषिञ्चन्ति। विशुद्धं पर्यावरणं स्वस्थजीवनस्य पर्याय एव। पश्यन्तु, क्षीयते खलु वनालिः। नग्नोऽयं पर्वतकः। खण्डिताः खलूपवनराजयः। भवद्भिः किं क्रियते ? वृक्षाः लताः गुल्माः– सर्व एते न केवलं प्राणदायका अपितु पृथिव्याः भूषणान्यपि सन्ति। अतः पोषयन्तु वनं पालयन्तूपवनम्। अस्मिन् ग्रामे यद्रोगदैन्यपाशः प्रसरति तन्मूले पर्यावरणहानिः प्रकृतिपीडनमेव। कथं तां शाखामेव कृन्तन्ति यामधिरुह्य तिष्ठन्ति! यः पर्यावरणं प्रदूष्य नीरोगः सुखी च स्थातुमिच्छति स नूनमेव नासिकाग्रेण कर्णमूलं कर्षति। अहन्त्वद्य वा श्वो वाऽतो नगरं यास्यामि किन्त्वत्र चिरस्थायिनो भवन्तो मा सीदन्तु पर्यावरणकोपेन। स्वप्रसन्नजीवनाय प्रसादयन्तु तम्। अस्मिन् कर्मणि युवजनानां महती भूमिकाऽपेक्ष्यते।"

अश्रुतपूर्वमिदं श्रुत्वा जनाः भृशं प्रभाविता आसन्। अये, बालोऽयं ज्ञानवृद्ध एवेति प्रशंसन्ति स्म। सर्वे तस्मै साधुवादं विज्ञापयन्ति स्म –"अनेन त्वस्माकं नेत्रोन्मीलनं कृतम्। अज्ञानेन वाऽविवेकेन वाऽस्माभिरस्य ग्रामस्य पर्यावरणं न केवलं प्रदूषितमपितु विनष्टमेव। अतः परमस्माभिः पर्यावरणसंरक्षणायाऽथ च समृद्धसुखग्रामजीवनाय सर्वथा प्रयतनीयम्।"

प्रशान्तं प्रति ग्रमीणानां कार्तज्ञं प्रशंसाभावं च विज्ञाय तस्य कुटुम्बिजनानां नेत्रेषु गौरवस्य काचिदपूर्वा द्युतिर्विद्योतते स्म ॥

**जीवनं जीवनं सत्यं वायुः वृक्षाश्च प्राणदाः।**
**पशवः कृमिकीटाश्च खगा मित्राणि वै गृहे॥**

**पश्य मानव, सर्वत्र प्रकृतिर्भाति सुप्रभा।**
**सा नित्यं मानवं वेत्ति स तु तां वेत्ति वा न वा॥**

**प्रकृतिं स्वामधिष्ठाय यः प्रकृतिं समर्चति।**
**प्रसादं प्रकृतेर्लब्ध्वा प्रकृतिं यात्यसंशयम्॥**

**नयनोन्मीलनं तस्य तदा मन्ये सुखावहम्।**
**पर्यावरणसंरक्षां यदा सोऽयं विधास्यति॥**

## ॥ अलातचक्रम् ॥

अस्त्युत्तरस्यां दिशि देवात्मनो हिमवतः क्रोडेऽवस्थितैका ग्रामटिका यस्यां वसति सम्पन्नगृहस्थकृषकः श्रीकान्तः। तस्य भार्यायाः भगिनीपतिः श्रीमान् सदानन्दः सुदूरे नगरे वसति। एकदा श्रीकान्तः कार्यवशात्तन्नगरं गतवान्। तत्र श्यालीधवस्य गृहे वसता तेन दिनद्वयमेवतिक्रांतं किन्त्वस्मिन्नेव स्वल्पे काले तस्य मनसि भृशमरतिराजगाम। एतन्नगरं प्रति प्रस्थितस्य तस्य मनस्यासीत्तत्र स्थिते सति स्वीये परिवारे किं नाम प्रयोजनमन्यत्रावस्थानस्य ? श्यालीधवस्य सम्बन्धोऽप्यस्मिन् युगे सहोदरादधिकतरो गण्यते मन्यते च। भार्याऽपि तं प्रणोदितवती – "नगरं गत्वा कुत्रचिद् धर्मशालादिष्ववस्थानाद्वरं यत्सदानन्दस्यैव गृहं गच्छ। विदेशे व्यवहारे च त्रपा कष्टकारिणी। स तु स्वजन एव। तत्रावस्थानात्कार्यसाधनमपि सुकरमिति। जायावचनमङ्गीकृत्य श्रीकान्तेन तथैव कृतम्। तत्र गत्वा सदानन्दस्य गृहसङ्केतानुसारं यदा भवनं प्राप्तं तदा द्वारलौहकपाटमनावृत्य सहसा प्रवेष्टुं श्रीकान्तस्य साहसमेव नाभवत्। नेत्रे विस्फार्य सौधं दर्शं दर्शं तस्य चित्ते प्रतीतिर्निर्देदिति – 'इदमेव भवनं सदानन्दस्ये'ति। सश्रीकः सदानन्दो धनाढ्योऽस्तीति तु स जानाति स्म किन्त्वेतादृशं लक्ष्मीप्रसादं प्रासादं निरीक्ष्य श्रीकान्तस्य विस्मयो विश्रान्तिं न लभते स्म। नयनगोचरामन्तर्वर्तिनीं पुष्पलतापादपसंवलितां ललितकलितां गृहोद्यानशोभां चक्षुषाऽऽपिबन्निव स बहिर्द्वारदेशे चिरं तस्थौ। पुनरपि कञ्चुककोषान्निस्सार्य सङ्केतलेखं द्वारदेशालिखितञ्च निपुणं निरीक्ष्य, 'इदमेव भवनं मम श्यालीधवस्ये'ति समाश्वस्तः सञ्जातः।

अथ श्रीकान्तस्य मन ईर्ष्याकषायितमासीत्। यदि अहमप्येतादृशो धनाढ्यः, कारयामि ग्रामे निजं गृहं विशालं हर्म्यमिति। नगरे भूमेरपि महर्घता श्रूयते। किन्तु ग्रामे मम गृहं परितो भूमिः सुविस्तृताऽपि निरर्थका। यदि तत्र पुष्पलतापादपान्

करोमि, ग्राम्यपशवस्तान् विनश्येयुः । तत्र तु स्वतो जाताः निम्बपिप्पलतरवः सन्ति । भवतु, स्थाने सर्वं शोभते । इयं लक्ष्मीरपि कीदृशी ? कदा कस्मै प्रसादं वितरिष्यतीति को ज्ञातुमर्हति ! इत आयाति, उतो याति । पात्रतामपि न विचारयति । औचित्यमपि नाभिलक्षयति । गुणमपि न स्वीकरोति । अस्थिरत्वादेव चञ्चलेत्यभिधां धत्ते । नाहं तादृशो भाग्यवान् । एकदा द्वारगतः कोऽपि सामुद्रिको मम हस्तरेखाः सुनिपुणं परीक्ष्य सत्यमेवोक्तवान् – "धनार्जनमस्ति न तु सङ्ग्रहः। एकस्मिन् हस्ते द्रव्यराशिरागच्छति किन्त्वपरतस्तथैव निर्गच्छति ।" ग्रामे कष्टेनापि संचितं धनं न तथा राशीभवति यथा नगरे ।

ततश्च श्रीकान्तः तत्सर्वं विस्मृत्य स्मृत्वा चेश्वरं, भूगतां पोटलिकां करे कृत्वा लौहद्वारकपाटमेकमपावृत्य परिसरप्राकारान्तर्वर्ती भूत्वा भवनाभिमुखं ससर्प पदात्पदं सरतस्तस्योपानद्रवेण भवनाभोगः शब्दायमानो बभूव । ग्रामवीथिष्व-नेनोपानद्ध्वनिना तस्य वक्षो गर्वसमुन्नतं भवति किन्त्वत्रायमसामान्यः प्रतीयत इत्यनुभूय सङ्कोचवशात् स शनकैः पादक्षेपं करोति स्म । इदं नगरम् । अत्रत्यो जनो भवनान्तवर्ती प्रशान्तः सन् लेखनादिकं कर्म करोति । अतस्तस्येयं ध्वनिपीडा मा भूदिति विचार्य महता संवारणप्रयत्नेन भवनालिन्दमुपक्रम्य द्वारदेशं जगाम । अहो, कीदृशोऽयं चिक्कणः कुट्टिमः ! न स्यादयं ममोपानन्मलिन इति विमृश्य पादाभ्यामुपानहौ मोचयित्वाऽलिन्दाद्बहिर्देशे संस्थाप्य पुनरागत्य द्वारकपाटं हस्तेन प्रहृत्योच्चैराकारयामास – "अये भ्रातः ! अयमहमागतोऽस्मि ।" किञ्चित् क्षणं प्रतीक्षमाणस्तस्थौ किन्तु नागतं किञ्चिदुत्तरम् । विलम्बसहनाय स इतस्ततो दृष्टिं दत्तवान् । अहो विचित्रं शिल्पकर्म ! अद्भुता च वास्तुभव्यताऽस्य भवनस्य । अदृष्टपूर्वं खल्वेतादृग् विविधवर्णवैचित्र्यशोभाप्रकाशयुतं भवनम् । सर्वत्र साश्चर्यं दृष्टिनिक्षेपं कृत्वा पुनः द्वारकपाटं प्रहृतवान् । ततश्चैको बालकः शनकैरीषदिव कपाटमुद्घाट्याऽऽपादशिरसं तं व्यलोकयदपृच्छच्च – " किं प्रयोजनं कञ्चेहरसे ?

श्रीकान्तस्तस्यानुभावात्तं बालकम् – एष मे श्याल्याः सुत – इत्यवबुध्य प्रोवाच – "भ्रातरं श्रीसदानन्दमनुसन्दधामि । अपि तस्यैवेदं गृहम् ?"

मौन एव बालः शिरोमुद्रया मुखभावेन च स्वीकृतिं प्रकटयामास। श्रीकान्त पुनरप्यभाषत् – "तस्य श्यालीधवोऽस्मि। तव मातृष्वसृपतिः। अपि वर्तते मे भ्राता गृहे ?"

विस्मितमानसो बालकस्तथैव तमागतं पुरुषं व्यलोकयत्। एतस्मिन्नेवान्तरे भवनाभ्यन्तरान्नारीस्वरोऽश्रूयत – "कः कोऽस्ति ?"

बालकः शिरोग्रीववलनपूर्वकमवोचत् – "मातः ! एष पुरुष आत्मानं मे मातृष्वसृपतिः कथयति।" "किं मदीयो भगिनीपतिः ?" – इत्युच्चार्य कपाट-सन्धिछिद्रतः श्रीकान्तमपश्यत्। अहो, सत्यमेव तस्या भगिनीधवः। सा द्वाराद्-बहिरागतवती। एकस्मिन् करे पोटलिकाऽपरे च कर्पटप्रसेवः – एतादृशो ग्रामवेषविशिष्टः श्रीकान्तः श्यालीं दृष्ट्वा चमत्कृतचक्षुरभवत्। तस्या अपि रागरञ्जितेऽधरे नीरसा स्मितिः प्रादुरासीत्। ससम्भ्रमं चाब्रवीत् – "एहि, इत इतोऽस्मिन् कक्षे" – इति श्रीकान्तं निर्दिशती सा पुनरप्यन्तर्वर्तिनी बभूव, सोऽपि तामनुससार। मुख्यभवनात् पृथग्भागे कतिचन कक्षा आसन्। तेष्वेकस्य द्वारम-पावृत्य कक्षं दर्शयन्ती सा जगाद – भगिनीपते ! एष ते कक्षः। अत्र यथेच्छं वस।" श्रीकान्तस्तं कक्षं निर्वर्णयामास। मध्यमाकारविनिर्मिते सामान्ये तस्मिन् कक्षे नासीत् काचित्सज्जा। भित्तिषु क्वचित्क्वचिच्चित्रपटलान्यवलम्बितान्यासन्। एकस्यां भित्तौ गवाक्षोऽप्यासीत्। कक्षमध्ये शयनकाष्ठफलकः कारावासगतो निरपराधोऽपि सपत्नीपुत्र इवोपेक्षितो धूलिपटलाच्छादितो न्यस्त आसीत्। श्रीकान्तः सकरुणं विलोक्य स्कन्धादुत्तरीयं विमोच्य तेन काष्ठफलकाद् धूलिपटलमपसार्य, स्वानीतविष्टरबन्धमुन्मुच्य तस्मिन् काष्ठफलके सुस्थो बभूव। श्याली ततः कदा विनिर्गतवतीति स नाभिलक्षितवान्। कियत्कालानन्तरमेकः सेवकः तस्मै जलपानमुपहृतवान्। ततः सेवकोऽपि गतः।

अथ स बालकस्तमतिथिमुपागतवान्। आगत्य चापरिचित इव कक्षद्वार एव तस्थौ। श्रीकान्तो महता स्नेहेन – "एहि वत्स, तुभ्यं कानिचिद्वस्तूनि ददामी'त्युक्त्वा तस्य करं विधृत्य निजपार्श्वेऽकरोत्। तेनानीता पोटलिका

शयनफलकस्य शिरोभागे तथैवासीत् । श्रीकान्तः पोटलिकाग्रन्थिमुन्मुच्य नैकानि नगरदुर्लभवस्तूनि निस्सार्य तस्मै ददौ । भार्यया तत्र किं किं निक्षिप्तमिति स स्वयमपि न जानाति स्म । शुद्धघृतविनिर्मितमोदकानि, वदरीफलानीक्षुखण्डानि, नानाविधानि क्रीडनकानि -- एतत्सर्वं तस्य भार्या परमप्रीतिपूर्वकं बालेभ्यः प्रेषितवती ।

तस्मिन् दिने श्रीकान्तः क्वचिदपि न गतवान् । प्रदोषकाले गृहमागतः श्यालीधवः सदानन्दः केवलमभिवादनं कर्तुमेव श्रीकान्तं ददर्श । तस्मिन् कक्षे श्रीकान्तः कदाचिदेकाकी तिष्ठति, कदाचिच्छेते, कदाचिदुत्थाय कक्ष एव भ्रमति, कदाचिच्च गवाक्षे मुखं कृत्वा बहिः पश्यति । रात्रौ भोजनवेलायां सेवकस्तत्रैव कक्षे तस्मै भोजनमानीतवान् । क्षुधार्तः श्रीकान्तः कृताहारप्रणयः सुप्तो यात्राश्रमवशात् प्रगाढनिद्रामभजत् ।

अपरेद्युः प्रातरुत्थाय श्रीकान्तो नैत्यिकं निर्वाह्य स्वल्पाहारमुपभुज्य स्वाभीष्टकार्यनिष्पादनाय सेवकं पृष्ट्वा तत्स्थानसङ्केतं गृहान्निर्ययौ । अल्पीयसैव कालेन कार्यसम्पन्नतां नीत्वा सुचिरं नगरं बभ्राम । सायंकाले निवर्त्य तथैव तस्मिन्नेव कक्षे सेवकेनानीतं भोजनं जग्राह । नगरे नैकानि दर्शनीयस्थलान्यासन् । अतस्तानि द्रष्टुमागामिन्यपि दिने प्रातर्जलपानानन्तरं 'किमपि कार्यमवशिष्टं वर्तते'' इति सेवकं संसूच्य स विनिर्गतः । अस्तङ्गते भगवति सवितरि पुनराजगाम । गृहे यावद्दिनं निष्प्रयोजनं स्थित्वा स किं करिष्यति ? अतो नगरदर्शनमेव वरमिति मत्वा विगतचिन्तः स्वैरं पर्यटन् स नगरजीवनमापणं विशिष्टानि च स्थानानि तत्र तत्र गत्वाऽवलोकयामास । एवं दिनद्वयं व्यतीतम् । रात्रौ भोजनोपचारं स्वीकृत्य विष्टरोपविष्टः स चिन्तयामास -- "अत्रागमनकाले मम हृदये कल्पनानन्दवारिधिः कीदृशः कल्लोलमालाकुल आसीत् ? श्यालीगृहं गच्छामि । हासपरिहासैः कालः क्वगत इति ज्ञानमेव न भविष्यति । तस्याः परिहासमधुराणि वचोवैचित्र्याणि ममापि च प्रत्युत्तरवैदग्ध्यम् ! बालानां मनोविनोदनवार्ताः ! धनाढ्योऽभिजनश्च श्यालीधवः ! तस्य सङ्गतौ दिवसानां गतागतमेव नावगमिष्यामि । सेवकैस्सह तस्य मोटरयाने

नगरभ्रमणाय कौतुकयात्रां विधास्यामि। किन्तु हा! अत्रागते सर्वे कल्पितानन्दा अपक्वमृद्भाण्डवद् विनष्टा। कोऽप्यनभिष्ट आगतोऽस्मीति सामान्यशिष्टाचार-स्यौपचारिकताऽपि न व्यवहृता।अन्यत्रावस्थानमेवास्माद्वरमासीत्।अत्रैवावस्थातुं मां भूयो भूयः सप्रणयं प्रणुदती सा वराकी जाया तदानीं कीदृशी हर्षोत्फुल्लनय-नाऽऽसीत्। अत्र मयाऽऽप्तमीदृशं निर्ममं व्यवहारं श्रुत्वा तस्या मनोदशा का भविष्यति? नातिचिरमिव व्यतीतः स ग्रीष्मकालो यस्मिन् एष एव श्यालीधवः सदानन्दः सपरिवारो मम प्रकृतिशोभासम्पन्नं ग्राममगात्। अस्यातिथ्ये न काचित्त्रुटिः स्यादिति मया किं किं न कृतम्? सर्वं कृषिकार्यमन्यच्चापि गार्हस्थ्यप्रपञ्चमुपेक्ष्य विस्मृत्य वा सर्वात्मनाऽस्य सपर्यायां बद्धाञ्जलिरासम्।

अद्य तत्सर्वमेकैकशः श्रीकान्तस्य स्मृतिपथं समाक्रामति। योऽहं तदाऽऽजागरणाद्रात्रौ शयनपर्यन्तं सदानन्दं छायेवान्वगच्छम् स एव सदानन्दे-नेत्थमवमानितः। अहो तस्य समयाभावो! यतो हि स क्षणमपि गृहागताय प्रियतरातिथये न व्यवस्यति। यदि कुशलवार्तां प्रष्टुं तस्य नावकाशः, प्रातः कार्यालयं गन्तुं त्वरा तर्हि रात्रिभोजनं तु सहैव भोक्तुं शक्नोति। भवतु नाम, स भृशं कार्यव्यापृतो जनो नावसरं लभते किन्तु तस्य पत्नीयं मदीया श्यालीमहोदया यावद्दिनं किं करोति? किमहं प्रत्यहमस्या गृहमागच्छामि? या भगिनी एतां तादृशं स्निह्यति तस्या विषयेऽप्यनया किमपि न पृष्टम्? बालकास्तु मम सम्बन्धपरिचयमपि न पृच्छन्ति। विमुखस्तिष्ठति गृहसेवकः का कथाऽन्येषाम्? किमेते नगरवासिनो धनिनो जनाः स्वार्थमभिलक्ष्यैव प्रेम व्युत्पादयन्ति? अथ वा ग्राम्यं मां हीनतमं मन्यन्ते? उताहो मया सह सम्बन्धद्योतनात्तेषां कौलीनमर्यादाभङ्गः स्यात्? इत्येवं बहुधा सामर्षविमर्शपरस्य तस्य मनस्यरतिराविर्बभूव।कक्षभित्तयस्तस्मै तदानीमलातचक्रमिव प्रतिभान्ति स्म। स क्षणमात्रमप्यत्र न स्थास्यतीति न केवलं स्वीयां दृढबुद्धिमपितु विष्टरबन्धमपि बबन्ध। कक्षतो निर्गत्यालिन्दे तस्थौ। सेवकमाहूय श्यालीं सन्दिष्टवानहं ग्रामं गच्छामीति। सत्वरमागत्य सा सव्रीडं पप्रच्छ-"कथं रात्रावेव गच्छसि? किमत्र मनो न रमते?" "इदानीं

कृषिकर्मकालः। यत्कार्यवशादागतोऽस्मि तत्तु साधितमेव। अतो निष्प्रयोजनेनात्रावस्थानेन को लाभः ?" – इति प्रोवाच श्रीकान्तः।"का त्वरा ? दिनकतिपयं विश्रम्य गच्छ। आपणाद् बालकेभ्यः किमप्युपायनमपि नानीतम्।" "बालकेभ्य आशीर्वादान् प्रयच्छे"त्युक्त्वा श्रीकान्तो झटिति तामभिवाद्य ततो निर्ययौ॥

**लोके सम्प्रति सर्वत्र व्याप्नोतीयं कथा-व्यथा।**

**तत्त्वमलातचक्रस्य यो जानाति न सीदति॥**

●

## ॥ नवावतारः श्रवणकुमारः ॥

अधुना नगराणां दिनानुदिनं विस्तारः प्रवर्तते। नगरं परितो यानि शस्यश्यामलानि कृषिभूक्षेत्राण्युपवनानि फलोद्यानानि वाभिरामा आरामा च विलसन्ति स्म सर्वेषामेतेषां कथा त्वतीता। शनैश्शनैः प्रस्तरेष्टकामयपिशाच-पञ्जरस्तत्र सर्वत्र प्रसरति। नगराणां भौतिकं चाकचक्यं सौविध्यसंरक्षणभावना चावर्जयति समेषां हृदयानि। ग्रामान् हित्वा सर्वेभ्यो नगरावासकल्पनं रोचते। ग्रामाधारा अपि जना नगरेष्वप्येकमावासं निर्मातुं वाञ्छन्ति। ये नगरे क्वचिन्सेवाकार्यं कुर्वतः जीवनं यापयन्ति, ते त्ववशा इवावश्यमेव सेवा निवृत्तेरनन्तरं नगरजीवनलोभं त्यक्तुमशक्ताः सञ्चिताशेषधनाद्युपायैः महर्घामपि भूमिं क्रीत्वा भवनमाकल्पयन्ति। यदि नगरे सर्वविधसौविध्यसम्पन्नं भवनं न स्यात्तर्हाजीवनं धनार्जनस्य किं फलमितीच्छाप्ररोहः समाजेऽङ्कुरितः प्ररूढ इदानीं दृढमूलतां याति। अहमपि नास्यापवादः।

सुदीर्घे सेवाकाले ये सम्बन्धा अत्र नगरे प्रादुर्भूता प्रगाढताञ्चोपयाता, कुटुम्बस्य या सामाजिकी स्थितिः प्रोद्गता तद्रक्षणार्थं बालानां चाध्ययनार्थं नगरे निवासो युज्यत इति परिवारजनानां पक्षपातितर्कवचोभिर्मे ग्रामजीवनाभिलाषस्य मुखं पिहितमेव। सर्वेषां सुखे स्वकमपि सुखं मन्यमानस्य मे भवनोचितभूक्रयार्थं प्रयतमानस्य श्रुतौ श्रुतिरसमापतत् यदेको विस्तृतो भूभागो नगरान्नातिदूरे नवकालवनी ('कालोनी'ति) निर्माणाय यथोचितखण्डविन्यासपूर्वकं मार्ग-विद्युज्जलोद्यानादिभिः संयोज्य विक्रयार्थं विज्ञापितः। अतस्तद्भूविषये सर्व-मपेक्षितमवगम्य भूस्वामिभिः सह सम्पर्कं साधयित्वा, सर्वं साधु विज्ञाय, पुनः पुनर्विचिन्त्य संशोध्य च तस्मिन्नेकं भूखण्डं क्रीत्वा स्वर्गस्यैकं खण्डमधिगतवा निति सन्तोषसुखमनुभवामि स्म। भूमिं प्राकारसंरक्षितां विधाय कियद्वर्षानन्तरं

तत्र भवननिर्माणमारेभे। ममारम्भं दृष्ट्वा अन्येऽपि बहवो जना अभिप्रवृत्ताः। कतिपयैरेवाहोभिरचिरादेव तत्र रुचिरा जनसङ्कुलता सञ्जाता।

एकदा दिवसावसानवेलायां यदाहं श्रमिकेभ्यः साप्ताहिकं पारिश्रमिकराशिं वितरामि स्म, एकः सुदर्शनो युवा समागत्याभिवादनपूर्वकं मामवादीत्– "भवतोऽस्मि प्रतिवेशी कुलदीपो नाम, कुलदीपश्रीवास्तव्य इति। अहमपि स्वीये भूखण्डे भवननिर्माणारम्भं कर्तुं विचारयामि। अस्मिन् विषये भवन्तं संरक्षकं श्रद्दधामि। भवान् वृद्धोऽनुभवसिद्धश्च। भवतः साहाय्यं विना न मे कार्यसिद्धिः। भणितमेव– 'बृहत्सहायः क्षोदीयानपि कार्यान्तं गच्छति।' यतोऽहमेकाकी वित्ताधिष्ठाने चैकस्मिन् लेखाकारपदे सेवारतोऽस्मि। अतोऽत्र योगो मया, क्षेमश्च भवता विधेयः। अपरेद्युः भूमिपूजनं करिष्ये। तदानीं भवत उपस्थितिं सादरं प्रार्थये। कृपयाऽनुगृह्णातु मामिति।" अविश्रान्तप्रश्वासैकसन्तानेन सर्वमेतन्निवेद्य नमस्कृत्य च स यथागतस्तथैव च गतः।

अथापरे दिने सुविचारितलग्नवेलायां भूपूजनं संवृत्तम्। अस्मिन्नवसरे तस्य वृद्धा माता, कौमार्यशुभलक्षणा भगिनी, सौभाग्यसुन्दरी भार्या सरलाश्च मोहकाः शिशवस्सर्वे मुदितमानसा समागता आसन्। शोभनोऽयं परिगृहीत-प्रतिवेशिपरिवार इति परितुष्टिं परिवृणोति स्म मे मतिरस्मिन् प्रथमे दर्शने; प्रासादारम्भपूजनप्रसादप्रसादनेन सममेव समजायत प्रीतिः प्रतीतिश्च। कुल-दीपस्य नेत्रयोर्दीप्तेस्तस्य च मातुरानने तृप्तेर्भावं निर्वर्ण्य मे मनसि न जाने कीदृश आह्लादः समजनि। वृत्त्या प्राध्यापिका प्रवृत्त्या समाजसेविका मदीया भार्या संवादसेतुं द्रढयितुमिव तान् सर्वान् स्वीयमर्धनिर्मितभवनमानीय कियत्कालपर्यन्तं प्रचुरपरिचयपुरस्सरमभ्यागतोचिताचारमुपचारं सुचिरमनुष्ठितवती प्रथमप्रणयपरितोषाभिवादनवचोभिर्भावितानुभावसद्भावोद्वेल्लन्मानसोल्लासं परस्परमुपायनीकृत्य विसर्जिते तस्मिन्नालापकुतूहलाकुलेऽप्यनाकुले कुलायमाने कुले, तस्यामेव दिशि दत्तदृष्टी सुचिरमावां तस्थतुः।

ततश्च स्वप्नादुत्थित इव यावदहं पत्नीं प्रति दृष्टिं ददामि तावत्सा निमीलितनयना क्वचिदन्यलोकगतेव, विचित्रचित्रदर्शनरतेव, मुदितमुद्रितकोरक-

पल्लविनीलतेव, शान्तसलिलसुप्तमीनह्रदेव, नन्दनवनपारिजातपरिवृतेव, कमलाकरकमलाकरविधृतेव, नितान्तैकान्तकान्तस्मृतिहृतेव, किमपि विचिन्तयन्ती निश्चलनिष्पन्दावयवा परिलक्षिता। अनुभवतु सा किमप्यनिर्वचनीयं सुखमिति मनसा सञ्चिन्त्याहमपि तथैव स्थित ईषत्प्रदोषारम्भतमसि चम्पककुड्मलाभां विस्तारितशोभां दीपशिखां कुलदीपस्य भूपजनस्थाने इव भूपूजनस्थानेऽनिमेषदृष्ट्याऽवलोकयन्नासम किन्त्ववसितं कार्यं गच्छामो वयमि'ति श्रमिकप्रमुखमुखान्निर्गता वाणी बाण इव कर्णं भित्वा ध्यानभङ्गं चकार। सोऽपि विलसितविभ्रमा सुसम्भ्रमा सहसोन्मीलितनयना क्वचिद्दूरगतेव झटिति प्रत्यागता सुप्तावबुद्धेव विस्मिताऽपि स्मितमुखी बभौ।

तथाभूतां तां महतादरोदारप्रेम्णा वचसाऽपृच्छम्– "सवेगेन केन मनःसंवेगेन तरलीकृत्य नवनीतमिव ते चेतः कुत्र नीतमासीत्? कस्मिन् विलुलितललितविचारविस्तारापारपारावारे निमग्नाऽऽसीः? केन निचितनिचोरेण ह्यविदितचतुरचोरेण चकोरेण चन्द्र इवातन्द्रमपि ते हृदयं परिमुषितम्?" मयैवं पृष्टा सा स्पृष्टा कयाचिदिवाज्ञातशङ्कया दूरावस्थितं किमपि द्रष्टुमिवोदञ्चद्रोमराजिकण्टकितकलेवरा धीरेण स्वरेण प्रोवाच– "अपि त्वया परिलक्षित एको दुर्दर्शभावः। कुलदीपस्य भगिनीमुखे यस्य प्रतिच्छाया तस्या मातुर्वक्त्रे दैन्यमाविष्करोति स्म? तस्याः नयनयोर्नयने प्रक्षिप्य मया काचिदपरिमिता वेदनाऽनुभूता। सदैव सा त्रस्ता भीता मृगीव व्यवहरति स्म। कस्मिंश्चिदपि कर्मणि प्रवृत्तेः प्राक् सा नेत्रकोणेन भ्रातृजायाया मुखं ससङ्कोचं निभालयति। तस्याः पीडां ज्ञातुमहं शक्नोमि। स्त्रीणां मनोभावान् स्त्रीरेव सम्यग् जानाति।"

अथ गच्छत्सु दिवसेषु, केवलं कुलदीपः कदाचिच्च तस्य भार्याऽपि गृहनिर्मितिप्रगतिं द्रष्टुमागच्छति स्म। सामीप्यवशात्तत्रावस्थानाच्च तस्य भवननिर्माणावेक्षणं नित्यमेव मया साधितम्। कतिपयैरेव मासैर्मम गृहस्य निर्मितिः सम्पूर्णतां गता। गृहप्रवेशमहोत्सवे निमन्त्रितः परिवारस्तस्य पुनरागतः। तदानीं

प्रयोजनप्रपञ्चव्यापृतो भार्यायास्तां भणितिं साक्षात्कर्तुं नाशक्नुवम् । अचिरादेव कुलदीपस्यापि भवनं निर्मितेरन्तिमं स्पर्शमवाप्य सज्जीभूतं यतो हि तस्य सततभवननिर्मितौ कुतोऽपि धनबाधा नागता नापि निर्माणसामग्रीणां श्रमिकाणां वाऽभावः कदाचित्सञ्जातः । साधूक्तम् –

**"अचिरं प्राप्यते सर्वं येन लक्ष्मीः प्रसादिता।**

**सर्वसौविध्यसम्पन्नप्रासादस्य तु का कथा ?॥"**

ततश्च निर्वर्तितसकलगृहप्रवेशशुभोपचारः कुलदीपो महतोत्साहेनात्र सपरिवारः समागत्य स्वायत्तगृहसुखमन्वभवत् । वृद्धैर्यानि लौकिकसुखानि वर्णितानि तेष्वेकं नैजं गृहमप्यस्ति । स्वीया छन्ना पर्णकुटी अपि भाटकमूल्योपार्जितसौधमतिरिच्यते । अतः कुलदीपस्य दीप्तमाननमेव तस्यानन्दातिशयं व्यनक्ति । प्रारम्भिकेषु दिवसेषु स प्रायेण प्रातः सायं दृष्टिपथे निपतितः सन् यथोचितैरभिवादनादिभिरावां सत्करोति स्म । किन्तु समुदितेऽन्यकालवनीनिवासिसमवायेऽस्मान् प्रति तस्य व्यवहारश्शनैश्शनैरदर्शनं लोप इति सूत्रस्यान्वर्थतां जगाम । तस्येदृशस्य व्यवहारपरिवर्तनस्य मूलानुसन्धानविषये बहुधा विचिन्त्यापि न किमपि कारणं मया लब्धम् । 'दूरादेव मधुरो ध्वनि'रित्युक्तेस्साक्षादभिव्यक्तिं पश्यता मयापि स तृणीकृत एव । कथं कोऽपि प्रणयमारोप्य प्रीतिं च विवर्ध्यानायासमेवान्य इव भवति ? उपकृतमपि सहसा विस्मृत्य नेत्रं परावर्तयति । समुदिते सत्येवं मनसि यदापि तस्य भवनं द्वारदेशं वा पश्यामि, मनसि तिक्तता जायत एव । कदाचित्तस्य मातुः शून्यमिव, भावहीनमिव, दीनमिव, उदासीनमिव, खिन्नमिव, क्लेशनिर्भिन्नमिव, ग्लानमिव, म्लानमिव, हताशमिव, नष्टन्यासमिव, कदर्थितमिव, दुरर्थितमिव सन्तापसदनं वदनं विलोक्यान्यथैव काचित्प्रतीतिरुत्पद्यते स्म । एकदाऽवकाशक्षणेषु मया पत्नी पृष्टा – " अप्यालक्ष्यते त्वया कुलदीपस्य व्यवहारविवर्तनम् ? किमस्य कारणं स्यात् ?" सहजतयैव साऽविस्मिताऽपि स्मितमुखी मामब्रवीत् –

"किं कथयामि ? त्वं तु यावद्दिनमत्रैव स्थित्वाऽपि न जानासि। पुनरहं कथम् ? विद्यालयं गच्छामि। ततश्च महिलासेवामण्डलस्य कार्यालयम्। जानास्येवावकाशदिनेष्वपि स्वाश्रवाश्रयसंयोगो न भवति; येन केनापि बहिरेव भवामि। तथापि, यन्मयाऽस्मिन्विषयेऽनुभूतं तन्निवेदयामि। सहजसौजन्यवशात्प्रतिवेशिप्रीत्यनुरोधाद्वाऽऽवां द्वावपि कुलदीपस्य कुटुम्बे कामऽप्यधिकां रुचिं गृह्णावः। एतत्तु कुलदीपस्य भार्यायै न रोचते। कुलदीपस्तु तस्याः नेत्रविभ्रमादेशावेशविवशः तदेव करोति यत्साऽऽदिशति। एतद्रहस्यं भवान्न जानाति यदियं 'पुष्पा' कुलदीपस्य पत्नी तस्मिन्नेवाधिष्ठाने कर्णिककर्मकारिणी यत्रायं लेखाकारः। तत्रैव सेवागतयोरनयोः प्रथमं प्रणयः पश्चाच्च परिणयोऽपि गान्धर्वेण विधिना संभूतः। अतोऽयं तस्या एव वशवर्ती निदेशकारी च। न केवलं कान्तासम्मितमपि तु प्रभुसम्मितं वचःपालनं करोति। पुष्पा तु स्वकं रूपलावण्यं किञ्चिदधिकतरमनुभावयति। अतः सा तरुणी मुग्धहरिणीव भगिनी 'सुनीता' सुरुचिसम्पन्ना शीलादिगुणसंवलिता निसर्गसौन्दर्यसारश्रियाऽहर्निशं भ्रातृजायाया मानसमिर्ष्याकषायितं करोति यतो हि देहाभिमानिनी काचिदपि कामिनी कुहूयामिनीव पूर्णचन्द्रप्रभानिभमन्यासां वयोरूपराशिसम्भारं सोढुं न शक्नोति। सा पुष्पा विविधैरुपायैस्तां सुनीतां नित्यमेव त्रासयति। सा वृद्धा सरलहृदया सन्तानैकप्रेमाकुला श्वश्रूरपि तस्यै निर्मूल्या दासी एव प्रतिभाति या महानसकर्मारभ्य शिशुसेवापर्यन्तं सर्वं गार्हस्थ्यप्रपञ्चं निर्वहति। किमधिकं, सा पुष्पा त्वस्य कुटुम्बराज्यस्य निरङ्कुशा धृतदुर्वचनकशा साम्राज्ञी। कुलदीपोऽपि पत्नीमनुकूलयितुं तिरस्करोति जननीं भगिनीञ्च। पुष्पा तु प्रतीपाचारैस्तीव्रतापं पुटपाकप्रतीकाशमाविष्करोति तयोर्द्वयोः।

यथा सर्वमवबुद्धं तथा मया शिरःकम्पपूर्वकमङ्गीकृतम्—"अस्त्येवमि"ति। विचित्रोऽयं लोकः। पयोमुखेषु कनककुम्भेषु विषराशिरेवेति विज्ञातुं सर्वे न प्रभवन्ति। न केवलं त्रेतायुगे, कलियुगेऽपि दशाननत्वं प्ररोहति। अतो बाह्याकृतिं वीक्ष्य समीक्ष्य च मनो विज्ञानाभिलक्षणमतीवदुष्करम्।

एकदा प्रातः काले कुलदीपस्य गृहाच्चीत्कारध्वनिरश्रूयत। तदानीमहं वाटिकायां किमपि कुर्वन्नासम्। भार्या तु महानसे पाककर्मणि व्यापृता विद्यालयप्रस्थानसमारम्भाय प्रयतते स्म। सा नारीचीत्कृतिमाकर्ण्य ससम्भ्रमं बहिरागतवती दृष्टिक्षेपेण च पृष्टवती – "कुतोऽयं ध्वनिः ?" मया तु मौनमेव कुलदीपस्य गृहं सङ्केतितम्। सा दत्तकर्णा चिरं तत्र तस्थौ किन्तु पुनर्ध्वनिर्नायातः। कियत्कालं व्यतीत्य तस्य भवनस्य मुख्यद्वारमनावृतं बभूव। प्रतिदिनमिव कुलदीपः स्कूटरवाहनेनापत्ये विद्यालयं नेतुमगच्छत्। ततः प्रतिनिवृत्त्य यथापूर्वं पत्न्या सङ्गतो निजं कार्यालयं जगाम। मदीया भार्याऽपि यथाकालं स्वविद्यालयं गतवती किन्त्वद्य कुलदीपस्य भगिनी सुनीता विद्यालयं गन्तुं न निर्गतवती नापि तस्या माता दृष्टिपथ आयाता या प्रतिदिनं पुत्र्याः प्रस्थानकाले द्वारपर्यन्तमागत्य तावत्तामेव दिशं विलोकयन्ती तिष्ठति स्म यावत्सुनीता दृष्टिपथात्तिरोहिता न भवति स्म। अस्ति कश्चिद् विशेष इति मे मनो विमर्शपरं बभूव।

अथ समुपजातकुतूहलोऽपि किञ्चिद्विरम्याभ्यवहारादिकं कर्म निर्वर्त्य, कुलदीपस्य द्वारदेशं गत्वा, कुलदीपो गृहे नास्तीति जानन्नपि तस्यैव नाम गृहीत्वा यावदाह्वयामि तावत्तस्य माता "कोऽस्ति भोः" इति वाग्व्यवहृत्य निर्गता द्वारदेशस्थितं मां दृष्ट्वा बहुसंयमनप्रयासाऽप्यनायासं करुणं रुरोद। मम सन्देह इदानीं प्रत्यक्षीभूतः। सा द्वारकपाटमुद्घाट्य सहसा मम चरणयोः पपात – "मम पुत्रीमभिरक्षय" – सबाष्पार्द्रस्वरेणाभ्यर्थितवती। स्थितेः गम्भीरतामनुमीय तां समाश्वास्यापृच्छम् – "किं दुर्घटितम् ? अद्य सुनीता विद्यालयं कथं न गतवती ?"

"कथं गच्छतु सा वराकिनी ? क्रूरपिशाचिनी कुलकलङ्किनी रूपगर्वोन्मत्ता सा मे पुत्रवधूस्तस्याः प्राणानेवादातुं जिहीर्षति। अद्य मे कुसुमकोमला कन्या तया यमदूत्या विद्युत्स्तरीयन्त्रेण पृष्ठदेशे दग्धा पीडामूर्च्छिता चीत्करोति। शब्दरोधाय तेन पुत्रहतकेनास्या मुखे वस्त्रपुटकं सन्निविष्टम्। अपि चैता-

मेकस्मिन् कक्षे निधाय द्वारं पिधाय कुञ्जिकामादाय तौ निर्घृणौ गतवन्तौ। वृद्धाहमवशा क्व गच्छामि ? किं करोमि ?? भवानेव शरणम्। सा गरलपूरा, कुटिलक्रूरा मामपि न त्यजती''त्युक्त्वा सा मां तं कक्षं प्रति नीत्वा दर्शयामास। कक्षादार्तिरवोऽश्रूयत मन्दं मन्दम्। कथञ्चित्कपाटच्छिद्रेभ्यः सा मन्दभागिनी कुलदीपभगिनी कक्षकुट्टिमे भयस्य मूर्तिरिव, त्राससागरस्य वेलेव, आतङ्कफलस्य राशिरिव, शरीरिणी पीडेव, वेदनायष्टिरिव, दुःखव्यष्टिरिवाधोमुखी विशीर्णा निपतिता चादृश्यत। तथाभूतां तां दृष्ट्वैकतः करुणाऽपरतः क्रोधो व्यस्फुरत्। झटित्येव स्वगृहात् कुञ्जिकागुच्छकमानीय कथं कथञ्चिन्महता प्रयासेन तालकमुन्मुच्य द्वारकपाटेऽनावृते। वृद्धा जननी वायुवेगेन प्रविश्य तस्या उपरि पपात। साश्रुनयना तस्याः पृष्ठतो वस्त्रमपाकृत्य घोरं दहनलक्ष्म मामदर्शयत्। दीर्घायतं तद्दहनव्रणं तस्याः पाषाणहृदयायाः क्रौर्यशौर्यं सूचयति स्म। स्नेहाकुला कातरा माता तद्व्रणं नारिकेलतैलेलिप्तमकरोत्। अहमपि तस्या मुखं जलेन प्रक्षाल्य शिथिलांगीं ग्रीष्मातपसन्तापम्लानां वनलतामिव तां कराभ्यां क्रोडे समुत्थाय स्वगृहमानीय तस्या उपचारपरोऽभवम्। तां हरिद्रायुतं घृतगुड-दुग्धपाकं पाययित्वा चिकित्सकं समाहूय तन्निर्देशानुसारं समुचितविधिना व्रणोपचारं कर्तुमारब्धवान्। एतस्मिन्नन्तरे विद्यालयगतां पत्नीमपि दूरभाषेण विदितवृत्तान्तामकुर्वम्। सापि नातिविलम्बेनागता तस्याः सेवाकर्मणि व्यापृता बभूव चुकोप च भृशं कुलदीपाय सभार्याय। भयत्रासशङ्काकुलितहृदयाऽनवरत-नयनजलसिच्यमानवस्त्राञ्चला बाष्पावरुद्धकण्ठा घनीभूतां पीडां सन्तापद्रवीभूतां प्रवाहयन्तीव कम्पितेन स्वरेण प्ररुदती तस्याः वृद्धा जननी जननीतिवशादेव व्यथाकथाकारं प्रताडनाप्रकारं कुत्सितस्त्रीमात्सर्यसारं विषमासीर्ष्याप्रहारं प्रकटितकलिकलुषचित्तविकारं समूलाधारं वारंवारमपारं वर्णयामास। यथा यथा साऽस्मत्समक्षं तांस्तान् क्रूरात्क्रूरतरानुत्पीडनप्रकारान् सविस्तरं स्तरं स्तरादुद्-भिद्याश्रुजलसिक्तं विविक्तं व्यनक्ति स्म तथा तथाऽस्मद्हृदयममर्षघृणादयादि-भावसंवलितं कदर्थितं वेपते स्म। तस्याः रुदितवेगं निरोद्धुकामोऽहं सान्त्वना-

वचोभिः समाश्वासयामास – "मातः! अलं रुदितेन पृथिवीव स्त्री अपि सर्वसहा भवति। सततनयनाम्बुसेकतो विपल्लवोऽपि सहस्रधा प्ररोहति। त्वामेवं व्याकुलितां दृष्ट्वा सेयं तनया यातनया जर्जरिता धैर्यं त्यक्ष्यति शक्ष्यति च नहि दुःखस्य पारं गन्तुम्। अविरतनयनजलसिक्तं दुःखमपि तूलराशिरिव सुदुर्वहभारतामुपयाति। दुर्लक्ष्यं दुर्दैवम्। न जाने कस्य जन्मनः कर्मफलमिदानीमियं भुनक्ति। तत्तु अवश्यम्भावि एव, यतो हि – 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्'। मन्ये, दुष्धातोरिवास्याः सौन्दर्यगुणः केवलं दोषाय प्रभवति। अपि चानया पूर्वजन्मनि सा पुष्पा कथमप्यपकृताऽस्मिन् जन्मनि तस्यैवापकारस्य प्रतीकारं करोति। अत एतादृशे विषमकालेऽधीरतया न भाव्यम्" – इत्येव च बहुधा तां समाश्वास्य स्थगिताश्रुनयनामकुर्वम्। अन्तर्मथितं सर इव मे मनः क्षुब्धमन्यस्मिन्नेव भावभूमिं जगाम – "नास्ति खलु किमपि नामास्मिन् करालकाले कलियुगेऽसम्भवम्। यतो हि सौम्यमधुराकृतयोऽपि कलुषितान्तःकरणा दृश्यन्ते। हंसा बका इव, पिकाः काका इवाचरन्ति। येयं सुनीता कुलदीपस्य भगिनी स्नेहातिशयेन लालनीया सैव भ्रातृजायया विषमेर्ष्याविषमूर्च्छिता। दैवमपि निष्करुणं न जाने कस्य जन्मनः कर्मणां फलमुपायनीकरोति। यदस्या मातृमुखाद् विदितं तत्त्वत्यन्तकरुणम्। अयं कुलदीपः लोकलज्जावशादेव सुनीतां विद्यालयं प्रेषयति। पुष्पया त्वन्यथाऽविरतमियं गृहकर्मस्वभियोजिता मनागपि पठनक्षणं न लभते। शयनादुत्थाय प्रातःकालादेव प्रातराशं भोजनं च पचति। शिशून् सज्जीकृत्य विद्यालयं प्रेषयति। पुष्पायाः सर्वं प्रसाधनं विधाय गृहप्रपञ्चे च मातृसाहाय्यमपि करोति। विद्यालयात्प्रत्यागत्यापि सर्वं तथैव साधयति। इयं मन्दभागिनी यतमानाऽपि मातृसेवावकाशं न प्राप्नोति। एषा तपस्विनी वृद्धा सेवोचितसमयगताऽपि स्वयं कुलदीपकुटुम्बं सेवते। गृहस्य स्वच्छताविधानं, भाण्डमार्जनं, वस्त्रादिप्रक्षालनं, शिशूनां सपर्यादिकं सर्वमेव साधयति क्रीतदासीव। कुलदीपस्तु सततं पत्नीप्रसादनाराधनपरः तिरस्करोति भगिनीं जननीञ्च। कदाप्येतयोः कर्णे तस्य

सहानुभूतिस्वरो नायातः। अद्य प्रातःकाले सुनीता स्वभ्रातृजायायाः पुष्पायाः शाटिकां विद्युत्स्तरीयन्त्रेण संस्कुर्वती रन्धनशालायां पच्यमानं शाकं द्रष्टुं गतवती। न जाने कथं सा तप्ता लौहस्तरी शटिकाया उपरि पतिता। यावत्सा महानसान्निवर्त्य पश्यति तावत्तदाकारगता शाटिका निर्दग्धा। वस्त्रज्वलनगन्धं घ्रात्वा सा पुष्पा त्वरितपदा तत्रागत्य क्रोधावेशरक्तनयना तां केशेष्वाकृष्य भूमौ निपात्य दुर्वचोभिः पादाघातैश्च तां स्वैरं निपीड्य तथातप्तां तां लौहस्तरीं तस्याः पृष्ठदेशे निधाय दग्ध्वैव स्वहृदयं शीतलमकरोत्। पुत्रीरक्षणाय तादृक्क्रूर-कर्मनिषेधाय च प्रयतमानां धावन्तीं समागतां वृद्धां श्वश्रूमपि करव्यापारेण प्रहृत्य कुट्टिमे तथा निपातितवती यथा तस्याः रदनभङ्गात्सा रुधिरक्लिन्नमुखी बभूव। ततश्च कुलदीपोऽप्यागत्य सुनीतां बहुधा निर्भर्त्स्य कराभ्यां तां बलादाकृष्याऽन्यस्मिन् कक्षे क्रोशन्तीं प्रक्षिप्य द्वारकपाटे पिधाय तालकेन निरुध्याकण्ठमशित्वा पत्नीं स्मितमुखीं स्कूटरयानमारोप्य निर्ययौ।''

कुलदीपस्य माता कदा निजगृहं गतवतीति नेत्रे निमील्यैवं विचार्यमाणेन मया न ज्ञातम्। ''चायपानं कर्तुमिच्छसि''–इति भार्यावचनाद् भङ्गविचार-क्रमोऽहमपश्यं यदौषधिप्रभावेण सञ्जातवेदनामान्द्येन किञ्चिदिव समाश्वस्ता सुनीता निद्रां भजते। 'लब्धसुखलवेव प्रतीयते' इति सकरुणं वीक्ष्य मम भार्या चायपेयमानेतुं गता। अहं पुनरपि सुनीताविषयिणीं चिन्तामाश्रित्य तथैव स्थितः।

चायपेयं पायं पायं यमनुचिन्तयामि स एव कुलदीपः चायचषकरिक्त्या सममेव समक्षमुपस्थितोऽभूत्। तं दृष्ट्वा घृणापूर्वकमाननं परावृत्य मयोपेक्षा प्रकटिता। सोऽपि सावहेलं नमस्कृत्य– '' क्षम्यताम्। व्यर्थमेव भवता कष्टं समर्जितम्। प्रमादत्वेनैव सुनीता लोहस्तरीयन्त्रेण दग्धा। तदानीमावयोः कार्यालयत्वराऽऽसीत्। इदानीं तु चिकित्सकं परामृश्य समुचितौषधिः मयाऽऽनीता– इत्यभिधाय मुखाकृत्या तादृशं भावं प्रादर्शयद्यन्मया तस्य कौटुम्बिके प्रपञ्चे हस्तक्षेपं कुर्वता साधु नाचरितम्। अहं किमपि कथयामि

तस्मात् प्रागेव रोषावेशविवशा तर्जनतरलिततर्जनीकं दक्षिणं करमुत्क्षिपन्ती, तन्मुखोपरि दहनदृष्टिं पातयन्ती, मर्मच्छिद्भिः शल्यतुल्यवचोभिरुद्वेजयन्ती तं – "नहि, नहि; नाहं गन्तुमुत्सहे। सा पापकारिणी नूनमेव मम प्राणान्न त्यक्ष्यति। तस्याः रूपपाशपतितः क्लीबत्वमापन्नोऽयं केवलं दुःखाय मे सहोदरः। नायं भ्राता शत्रुरेव। क्व गता मे माता ? तामप्यत्रैवानीयाभिरक्षय। अन्यथा, सा गर्हितगरलावयवा विषपुत्तलिका भ्रमरान्विता पुण्डरीकमुखीव तां मन्दभागिनीमपत्यप्रीतिसमृद्धां वृद्धां नित्यमेव निशितनिचितवचःशल्यविद्धां विधाय विगतजीवितां करिष्यति" – इत्येवमुच्चैरभिधाय वेपमाना भीतिसङ्कुचिताङ्गी तथैव निमीलितनयना तस्थौ सुनीता। एतस्मिन्नन्तरे कुलदीपस्यालीकं वचनमसहमाना भामिनी मे मानिनी भास्वतीं मूर्तिं दधाना निर्भर्त्सनोपदेशप्रधानं ज्वलनज्वालासन्निधानं वाग्विधानमवलम्ब्य सोद्वेगमुवाच – "रे क्रूर नराधम ! त्वामालोक्य ते च दुष्कृतमालोच्य कथं कापि जननी पुत्राय भगिनी च सहोदराय स्पृहयिष्यति ? त्वया त्वत्पत्न्या च यादृशी यातनाऽऽभ्यां दीयते तादृशी न केनापि घोरेण शत्रुणा। बाह्यतः क्लृप्तसाधुवेषोऽपि जननीं भगिनीं च प्रति बर्बरमाचरसि। विवेकविमुखमपि पत्नीमुखं वीक्ष्य कथं ते हृदयं कर्कशपाषाणकठिनं सञ्जातम्। कश्चिद् वधिकोऽपि युष्मदधिकमुदारतरो भविष्यति। अरे, या भगिनी त्वया लालनीया, या जननी त्वया सेवनीया, त उभ एव तवात्याचारैरहर्निशं व्याक्रोशतः। न बिभेषि लोकाद् धर्मादीश्वराद् वा ? नरो भूत्वाऽपि पशुत्वमङ्गीकरोसि ? किं तेऽपकृतमाभ्याम् ? यस्यैवंविधां निष्कृतिं निर्वहसि ? इमे तु ते कुटुम्बस्य शोभे। सत्कृत्य सम्पूज्य सबहुमानपुरस्सरं समर्पय भगिनीं कस्मैश्चिद्योग्याय शोभनाय वराय। न हि कश्चिन्मातृसमोऽस्मिन् संसारे। तत्तुल्यतैव नास्ति। सा तपस्विनी क्रीतदासीव शङ्कात्रासभयाकुला शरीरिणी व्यथेव तव सर्वं गार्हस्थ्यभारं वहति। साऽप्यद्य त्वत्पत्नीप्रहारघूर्णिता भूपतिता भग्नदन्ता रुधिरक्लिन्नमुखी तिष्ठति। सापराधस्त्वं तु पापोऽसि दण्डार्होऽसि।"

भार्याया निर्भर्त्सनोपदेशो विरामं न लप्स्यत इति विचिन्त्य तद्वचनवीथीमतिक्राम्यावरुद्ध्य च धिक्कृतिप्रवाहं मया भणितम् – "अलमेभिर्वचोभिः। उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये। अतो विरम यतो ह्ययं न केवलं मूर्खोऽपितु मूढ एव। गृहंगताायास्तस्याः वृद्धायाः न जानेऽयं कां दुर्दशां करिष्यति। अत्रानीता सुनीता खलूत्पीडनक्लेशाब्धिं समुत्तीर्णा।"

एवं मयि कथित एव स सरोषं प्रोवाच – "इयमत्र न स्थास्यति। अहमेतां नेष्यामि।" मया प्रोक्तम् – "यदि गन्तुमिच्छति सा। बलान्नेतुं न शक्नोषि।" एतन्निशम्य किमपि वक्तुमसमर्थः स कुलदीपः सर्वथा तिरस्कृतो गृहरहस्यभेदाल्लज्जावनम्रमुखः क्रोधात्प्रलपन्निव सत्वरं निर्ययौ।

गते तस्मिन् सुनीता मामब्रवीत् – "अस्ति ममैका सोदरा ज्येष्ठा भगिनी नगरेऽस्मिन्नेव। मे भगिनीपतिस्त्वत्रैव विश्वविद्यालये कस्मिंश्चिद् विभागे वरिष्ठाचार्यपदमलङ्करोति। सहस्रेषु कश्चिदेकस्तादृशः सत्पुरुषो दृश्यतेऽस्मिन् युगे। मदीया भगिनी मह्यं भूरिशः स्निह्यति। अत्युदाराशयो भवान् तां भगिनीमाहूय मां तस्याः करे करोतु।"

तस्या अनुरोधवशान्मया तत्र सन्देशः प्रहितः। सोऽपि श्रवणमात्रेणैवाजगाम। मन्मुखात्सर्वमवगम्य सा प्रथमं कुलदीपस्य गृहं गत्वा मातरमपि स्वगृहं नेतुं निवेदितवती। वध्वः कटूक्तिभिर्व्यङ्ग्यवचोभिश्चाविचलिता सा वृद्धा, 'अस्मिन्नेव गृहेऽनयोः कराभ्यां मरणं वरं न तु कन्यागृहनिवसनमि'ति तया सह गमनं नाङ्गीचकार। सा वारं वारमनुरुध्यापि मातरमनुकूलयितुं न शशाक। अन्ततः सा मत्समीपमागत्य केवलं सुनीतामेव सनाथीकृत्य स्वगृहं प्रतिनिवृत्ता। तस्मादेव दिनात्कुलदीपमुखदर्शनात्पापमेव जायते मनसि चाभवत् –

**'कीदृशः कुलदीपो न कुलं येन प्रकाश्यते।**
**प्रयुक्तेन प्रमादेन भवनं येन दह्यते॥'** इति।

शनैश्शनैर्वयमपि संसारपरिपाटीपतितास्तद्वृत्तं विस्मृतवन्तः।

स्मरामि, एकदा प्रातःकालादेवारभ्य यावद्दिनं घोरा वृष्टिः समजायत्। सपत्नीकः क्वचित्कार्यवशाद् गतोऽहं यावद्गृहं प्रत्यावर्तनं करोमि तावद्दूरादेव निर्जनेऽपि राजमार्गे वृद्धामेकां स्खलिद्गतिकां शनैश्शनैस्सम्मुखमापतन्तीं पश्यामि। आगामिन्येव क्षणे सामीप्यादुपजायमानाभिव्यक्तिं तां निपुणं निरीक्ष्य, सहसा मे मुखात् – "अये, इयन्तु कुलदीपस्य माता" – इति निर्गतम्। तत्क्षणमेव चालकस्य स्कन्धोपरि हस्तं विन्यस्य कारयानं रुद्धगतिकं कारयित्वा वर्षाजलार्द्रदेहां तां यानान्तर्वर्तिनीं विधाय – "केयं दशा ? कुत्र गच्छसि ?" – इत्यपृच्छम्। सा तु निश्शब्दं जलार्द्रमपि वस्त्रं पुनर्नयनजलेन क्लेदयितुमारब्धवती। नयनाभ्यां वहिर्गतमश्रुजलं क्लेशमशेषं मौनमेवावेदयतीति सर्वमवगम्य, तां तेनैव यानेन भार्यया सञ्चालितं 'वृद्धानारीनिकेतनं' समानीय तत्रैव सुस्थाप्य गृहमागतवन्तौ। तस्मिन् काले आवयोर्मनसि भावस्त्वेक एवासीत् – 'इदानीं वृद्धाऽपि निरापदा। कलियुगे कुलदीपः कोऽपि नवावतारः श्रवणकुमारस्य। अतः पूर्वमेतादृशः श्रवणः श्रवणे नायात' इति॥

**लोकेऽधुना चरित्रस्य शुचितां नैव दृश्यते।**
**मानवजीवने हन्त! सम्बन्धा अपि खण्डिताः॥१॥**

**केयं माता पिता कश्च का स्वसा कः सहोदरः।**
**अपत्यानि न पश्यन्ति रूपजालविमोहिताः॥२॥**

**सन्तीदानीं युवानो ये तद्वार्धक्यं सुनिश्चितम्।**
**करिष्यन्ति तथाचारं तेषां पुत्रा यथैव ते॥३॥**

**सेवायास्तु फलं सेवा पीडनस्यापि पीडनम्।**
**व्युप्तं बीजं यथा क्षेत्रे तथैव फलमश्नुते॥४॥**

**समाजे नापलापोऽस्ति नियमो नैव लोपितः।**
**काचगृहस्थितैर्लोष्ठः कथमन्येषु युज्यते॥५॥**

कथायाः कुलदीपोऽयं नास्त्येकः कुलदीपकः।
नैका रूपमदा पुष्पा ह्येते सन्ति गृहे-गृहे॥ ६॥
सुनीता गोनिभा कन्या वृद्धा माता तपस्विनी।
क्लिश्यत्येतादृशी चान्या क्रूराचारविमर्दिता॥ ७॥
यथाऽत्र कुलदीपेन पुत्रत्वमेव लाञ्छितम्।
कापि कुर्यात्कथं माता पुत्राय महतीं स्पृहाम्॥ ८॥
यथा महज्जलौघेन नद्याः कूलं विभिद्यते।
तथैवेह कुपुत्रेण सत्कुलमपि नश्यति॥ ९॥
अतः सर्वे नरा लोके कर्णे कुर्वन्तु मद्गिरः।
रक्ष्यं मर्यादितं मूल्यं पाल्या प्रीति-परम्परा॥ १०॥
श्रद्धया यः पठत्येतां कथां प्रीत्या शृणोति वा।
कदापि हि कुले तस्य विपदेषा न जायते॥ ११॥

●

# ॥ रात्रिरेवं व्यरंसीत् ॥

अस्ति शोणभद्रनाम्नि जनपदे शोणनदस्योत्तरे तीरे प्रस्तरमयी प्रकीर्णगृहावस्थानसङ्कुला विविधवनवृक्षबहुला काऽपि ग्रामटिका। तत्र कूट इवैको ग्रामकूटो बलदेवो यो न केवलं मध्यमवर्गीयः कृषकोऽपितु प्राथमिक-पाठशालायाः प्रधानाध्यापकः। तस्य विद्यालयः पारेशोणं ग्रामाद् द्वियोज-नान्तरेऽन्यस्मिन् ग्रामेऽवस्थितो वर्तते। स प्रतिदिनं पदातिरेव तत्र गत्वा सायङ्काले तथैव निवर्तते। तेन सह ग्रामटिकायाः पञ्च बालका अपि तस्मिन् विद्यालये पठितुं गच्छन्ति। एकः कैवर्तकस्तान् नौकया नदस्येतस्ततश्च पारं नयति। अयमेव क्रमोऽस्ति प्रतिदिनस्य। महती खलु प्रतिष्ठा वर्तते बलदेवस्य। तस्य सरलं जीवनं प्रचुरोदात्तचरितञ्च सर्वेषामाबालवृद्धानां प्रेरणाप्रदमस्ति। अनुशासनप्रियत्वं कर्त्तव्यनिष्ठा च शिक्षकसमाजे तस्य यशो विशदीकरोति। अधिकारिणोऽपि तस्मै समुचितादरं प्रयच्छन्ति, तदधीनानां शिक्षकाणां तु कथैव का! नास्ति स केवलं कस्यचिद्विद्यालयस्य प्रधाना-ध्यापकोऽपि तु तस्य क्षेत्रस्य सत्परामर्शदाता। यथा शिक्षाविषये तथैव कृषिकर्मण्यपि तस्य महती प्रीतिर्भवति। स सदैव शिक्षणकर्मणि कृषिकार्येऽपि नित्यनूतनवैज्ञानिकाविष्काराणां प्रयोगं कुरुते। बलदेवस्य सुखी परिमितः परिवारो महते मोदाय कल्पते समेषामादर्शरूपः।

एवं गच्छत्सु दिवसेष्वेकदा यदा स विद्यालयाद् गृहं प्रति निवर्तमान आसीत्तदैव मार्गे कोऽप्यपरिचित इव पृष्ठत आगत्य मोटरद्विचक्रि-कायानादवरुह्य पत्रमेकं बलदेवस्य करे निधाय सादरं नमस्कृत्य सत्वरं मोटरद्विचक्रिकायानमारुह्य यथागतस्तथैव निर्गतः। यावद् बलदेवस्तं किमपि प्रष्टुं मुखं विवृतवान् तावत्स सुदूरं यातः क्रमशो दृष्टिपथादलक्षितो जातः। तेन न किञ्चिन्मौखिकं व्याहृतम्। क आसीत्पत्रवाहकः? कस्येयं पत्रिका

भवितेति चिन्तितमानसः स यावदावरणमुद्घाट्य पत्रं विलोकयति तावत्तस्य पदतलात् धरिणी स्खलितैव। पत्रं नैकधा पाठं-पाठं तस्य शिरसि महती वेदना समजायत। नयनयोः समक्षं सकलं तिमिराच्छन्नमिव सञ्जातम्। दोर्भ्यां स्वशिरो विधृत्य स सहसा तत्रैव भूमावुपविष्टः। पत्रवाचनसममेव स्वाचार्यस्येदृशीं दुरवस्थां विलोक्य तस्य सहगामिनो ग्रामबालका कामप्यशुभां वार्तां विचिन्त्य दुःखकातरा बभूवुः। तेष्वेकः समधिकवयःप्राप्तश्छात्रो बलदेवस्य करं विधृत्य पृष्टवान् "श्रीमन्! भवन्तमेतादृशं कातरं तु वयं कदापि न दृष्टवन्तः। कथमद्य भवानीदृशः संवृत्तः? अस्ति काचिदमङ्गलप्रदा वार्ताऽस्मिन् पत्रे? न जाने, बलदेवेन बालकवचः श्रुतं न वा किन्तु स निश्चेष्टो जडीभूत इव तथैव तस्थौ। स बालकस्तस्य कराङ्गुलीषु लम्बितां तां पत्रिकामादाय पठितुमारेभे–"भोः बलदेव,

मम सहचरं वीरं रक्षिपुरुषेभ्यः समर्प्य त्वया साधु नाचरितम्। तमचिरमेवाहं कारागाराद् बहिरानेष्यामि किन्तु तव किं भविष्यति? मम दृष्टिपतितस्य महाकाल एव स्वामी। इदानीं स्वकमिष्टदेवं स्मर विस्मर चेमं लोकम्। अद्येयं रात्रिस्तव कालरात्रिर्भविष्यति। मम वीरास्तव गृहं परिवेष्ट्य वह्नये दास्यन्ति। सकुलं त्वां स्मृतिशेषं विधास्यन्ति। कथमपि त्वयाऽऽत्मरक्षार्थमुपायो न करणीयो यतः कोऽपि त्वां त्रातुं न शक्नोति। वेपथुर्जायते भयान्मम नामश्रवणादेव रक्षिपुरुषेषु। इमां पत्रिकां वीरोचितां पद्धतिमाश्रित्यैव प्रेषयामीति।"

पत्रस्यान्ते लिखिते नाम्नि दृष्टिनिक्षेपणात्पूर्वमेव नयने निमीलते कण्ठश्चावरुद्धोऽभवत्। यतस्तन्नामोच्चार्य गृहेषु मातारो विलपन्तं शिशुं रोदनाद् वारयन्ति। तस्य नाम त्वातङ्कस्य पर्याय एव। स दस्युराजः कालस्यापरा जङ्गममूर्तिः स्फूर्तिश्च प्राणापहारविधेः। बालकस्य भयकम्पितकरात्तत्पत्रं निपतितम्। अन्येषामपि बालकानां मानसेषु भयमाविवेश। ते व्याकुलदृष्टयस्त्रस्ताः सञ्जाताः। बालकानां तादृशीं दुरवस्थामनुभूय बलदेवो

भीतान्तःकरणोऽपि बालकान्निर्भयान् कर्तुं साहसं प्रदर्शितवान् । ततः समुत्थाय, निजानने स्मितिं प्रदर्श्य तान् सर्वान् प्रबोधयामास – "प्रिया वत्साः । न भेतव्यं न भेतव्यम् । य एतादृशाः पापपरायेणा अनर्थकारिणोऽकारणमेव जनान् हिंसन्ति पीडयन्ति वा ते दुर्गतिं गच्छन्तीति सुनिश्चितम् । भवतु नाम, धात्राऽस्यैव हस्तेन मम मृत्युर्लिखितो वर्तते ततः कोऽपि कथमपाकर्तुं शक्नोति ? किं भवद्भिर्न पठितम् –

**"कः कं शक्तो रक्षितुं मृत्युकाले ?**
**रज्जुच्छेदे के घटं धारयन्ति ??"**

अतः प्रचलन्तु नाम । ग्रामं गत्वा कमपि प्रतीकारोपायं चिन्तयामीति तान् बालकान् समाश्वास्य भयाक्रान्तमानसोऽपि प्रत्यक्षं निर्भय इव प्रदर्शयन् शोणमुतीर्य स्वग्राममाजगाम । सर्वे बालकाः स्वं स्वं गृहं जग्मुः ।

बलदेवस्तु स्वगृहं गत्वा सर्वत्र दृष्टिनिक्षेपं कृत्वा द्वारदेशे खट्वामाकृष्याधिरुह्य च चिन्तामग्न उपाविशत । तस्य भार्या तं विच्छायवदनं विलोक्य किमप्यनिष्टं विशङ्कमाना तं खेदकारणं पप्रच्छ । सोऽपि किमप्यन्तर्ध्यायन्निवाश्रुतप्रश्न इव भार्यां कातरदृष्ट्या निभाल्य कुशलादिकं पृष्टवान् । ततश्च पुनरपि सुचिरं निर्वर्ण्य पत्नीमन्तर्वर्त्नीं पार्श्वे निवेश्य प्रोवाच – "अपि कश्चिदत्रागतः ?" "न कोऽपीति" भार्यायाः प्रतिवचनं निशम्य पुनः किञ्चित्स्मरन्निवाब्रवीत् – "कुत्रास्ति कुमारः ।" "स तु गृहाभ्यन्तर्वर्ती तिष्ठति" – सोत्कमानसा भार्या पुनरवादीत् । का वार्तेति सा किमप्यवगन्तुं न शशाक । अतः साग्रहं पृष्टवती – "किं भूतम् ? त्वं भृशं खिन्नमना इव लक्ष्यसे । मामपि तथ्यमवितथमावेदय ।"

अथ बलदेवस्तां सर्वं पत्रवृत्तान्तमावेदयामास । तच्छ्रुत्वा तु सा सहसा सरभसं नभसः कस्मिंश्चित्तिमिराच्छन्ने गहनगर्त इव पपात । पिप्पलपत्रमिव तस्या गात्रयष्टिः कम्पति स्म । दिवस एव दृष्टिपथं निपतितास्तारक-

गणास्तस्याः नभसि। तप्ततपनीयस्तम्भावदाता तस्याः तन्वी तनुलता कृतकालसन्निधानेव कलिकलाकालिमाकलितां श्यामतामवाप।

"हा दैव! कथमयं कुलिशपातः?"—इत्युत्क्रोष्य सोरस्ताडनं तस्य चरणयोर्निपपात। ससम्भ्रमं तामुत्थाप्य बलदेवः—"समाश्वसिहि, समाश्वसिहि। कथमेवमधीरतया भाव्यम्? ईश्वर एव सर्वथाऽस्माकं शरणमित्येवं बहुधा प्रबोधितवान्। सा त्वीषदिव समाश्वस्ताऽब्रवीत्— "कथं स निर्घृणः पापो दस्युराजोऽस्माकं शत्रुः? अस्माभिस्तस्य किमपकृतम्?"

बलदेवो दीर्घं निःश्वस्य पुरावृत्तां घटनामेकां संस्मृत्य श्रावयामास— "विगते सप्ताहे विद्यालयस्य प्रगतिविषये विमर्शधिया ग्रामप्रधानस्य गृहं प्रति गच्छामि स्म। विद्यालयस्तु ग्रामाद्बहिरुत्तरदिशि किञ्चिद्दूरं वर्तते। ग्रामं विद्यालयमन्तरा शस्यक्षेत्राणि सन्ति। तत्रेदानीमिक्षुकेदारखण्डानि विलसन्ति। आसीत्सा खलु मध्याह्नवेला। विद्यालयान्निक्रम्य यदा क्षेत्रबन्धमार्गेण गच्छामि तदा मयाऽनुभूतं यत्कोऽपि विततसघनेक्षुततिं विदार्य प्रविष्टः। मानवः पशुर्वेति यावन्निपुणं निभालयामि तावत्तत्र निभृतं निविष्टं क्रूराकृतिमेकं पुरुषं पश्यामि। दृष्ट्वा च तं निश्शब्दपदैः परावर्त्य विद्यालयं गत्वा शिक्षकैश्छात्रैश्च सहागम्य तत्क्षेत्रं समन्ततो निरुध्य निपुणतया तं निलीनं पुरुषं विधृतवान्। "कस्त्वमि"ति पृष्टे सति यदा स्वीयैरुत्तरैः सोऽप्यस्मान् न तुतोष तदा बलाघातेन निपीडितः सर्वमुद्गीर्णवान्। स दस्युः कस्यचिद् ग्रामश्रेष्ठिनो बालकमपहर्तुं तत्रावसरं प्रतीक्षमाण आसीत्। ततश्च ग्रामप्रधानमाहूय तस्य साक्ष्ये निगडितः स रक्षिपुरुषेभ्यो निवेदितः। स नराधमोऽस्यैव दस्युराजस्य सहचर आसीदित्यनेन पत्रेण ज्ञायते। तस्य निष्कृतये दस्युराजोऽद्य निशीथे मम गृहं प्रहरिष्यत्यत एव पत्रमिदं प्रेषितवान्।" श्रुत्वेदं सकला एव कुटुम्बिनोऽनेन महता सङ्कटेन भीतास्त्रस्ता व्याकुलाश्चाभवन्। कथमस्मात्त्राणमित्यपि ज्ञातुं बुद्धिर्न प्रभवति स्म। शनैश्शनैः लोकैकचक्षुर्भगवान् भुवनभास्करोऽपि प्रतीच्यां दिशि नभस्यस्ताचलं प्रति चचाल। बलदेवस्य गृहे तु दिवसावसानात्प्रागेव निविडनैराश्यान्धकारः प्राविवेश।

एतस्मिन्नेवान्तरे छात्रबालकेभ्यो दस्युराजपत्रवृत्तान्तमुपगम्य सर्वे ग्रामवासिनो बलदेवस्य गृहं समागतवन्तः। अचिरादेव तत्र ग्रामीणजनानां सम्मर्दः समजायत। यो यथैवैतद्वृत्तं शृणोति स्म स तथैव धावन्नित एवागच्छति स्म। परन्तु न कोऽपि रिक्तपाणिरदृश्यत्। कस्यचित्करे लगुडः, कस्यचित्कुन्तः, कस्यचिन्मुदगरः कस्यचिच्च करे भल्ल आसीत्। बलदेवस्य म्लानं मुखं वीक्ष्य तेषां हृदि न केवलं महान्खेद आसीदपितु दस्युप्रतीकाराय क्रोधाग्निः समुज्जृम्भितः। सदैव स्मेरमुखो बलदेवः कथमिदानीं दैन्यस्य पराकाष्ठामधिरोति। स तु सर्वेषां प्रेमादरभाजनमस्ति। नान्योऽन्यं विमृश्यापि स्वत एव तेषां मनस्सु सकुटम्बकस्य बलदेवस्य रक्षायै प्राणानप्युत्स्रष्टुं कोऽप्यनिर्वचनीयः साहसोत्साहस्तरङ्गायमानस्तिष्ठति। ते सर्वे मन्त्रणां चक्रुः– "अद्य सायुधा वयं रात्रिपर्यन्तं विधाय जागरणमस्य रक्षायै सन्नद्धा भवेम। तृणाग्रमात्रमप्यस्य काचिद्हानिर्न भवेदिति सर्वविधोपायः करणीयः।" इत्येवं बहुधा विमृश्य तैः प्रभूतं काष्ठादिसञ्चयं कृत्वा गृहं परितः सुयोजितरूपेण वह्निं प्रज्ज्वाल्य प्रचुरः प्रकाशः प्रवर्तितः। स्थाने स्थाने उपलशकलानां राशिरपि सञ्चितः। एकस्मिन् बृहत्पात्रे रक्तमरिचचूर्णं जलेन सम्मिश्य स्थापितम्। कुन्तादिभिरायुधैरात्मानं सज्जीकृत्य ते सर्वे निर्दोषा अपि प्रदोषारम्भ एव दस्युप्रतीकारार्थं सन्नद्धाः सञ्जाताः। न केवलं परितो मानवशृङ्खला निर्मिताऽपितु गुप्तस्थलेषु साहसिकाः शूरा युवानो नियुक्ताः। तस्मिन् दिवसावसाने कस्मिंश्चिदपि गृहे चुल्लिकाग्निसंयोगो नाभूत्। दिवसावशिष्टमेव भोजनं शिशून् भोजयित्वा स्त्रियो गृहान्तर्वर्तिन्यो बभूवुः। कण्ठगतेषु प्राणेषु कस्मै जलमन्नं वा रोचते। अतः पूर्वमेतादृशी दुरवस्थाऽस्य ग्रामस्य कदापि नागताऽऽसीत्। बालास्त्वेतादृशीं भीषणभीतिसङ्कीर्णां स्थितिं नावबुध्यन्ति स्म। निरतिशयाशक्या वृद्धा एव स्वे स्वे गृहे भगवन्नामकीर्तनपरास्तस्थुः।

रात्र्यागमनेन सह जनानामनुरोधवशात् बलदेवः सकुटुम्बो द्वारं पिधाय गृहाभ्यन्तरं जगाम। तस्य त्रिवर्षीयः पुत्रोः पित्रोः मुखं वीक्ष्य, सर्वमेतद्

दर्शं दर्शं, मातुः क्रोडे मुखं निधाय भृशं चक्रन्द। पुत्राय सर्वोत्सर्गकारिणी जननी तमबोधं शिशुं स्वीयाञ्चलेनाच्छाद्य तस्मै निद्रामाहूतवती– "निद्रे मातः! समागच्छ; मम तनयं सुखदे ललामे स्वप्नलोके प्रापय। सत्वरं समागच्छ निद्रे मातः! सत्वरं समागच्छ। नायं मे कुमारो रोदिति सत्वरं समागच्छ निद्रे मातः! सत्वरं समागच्छ। नायं मे कुमारो रोदिति। एहि, निजे क्रोडे कृत्वा नयैनं नन्दनं वनम्। मध्वास्वादय, दुग्धं पायय। ऐह्येहि मातर्निद्रे!" अनन्तरं च करतलेन सुकोमलं शिशुकलेवरं बारम्बारं सस्नेहं परामृश्य गीतिकामिमां मन्दस्वरेणागायत –

**आयाहि मातुल चन्द्र निशीथे**
**स्वर्णमयीयं दोला रे।**
**तामधिरोहय दोलय मन्दं**
**वत्सो ममायं रोदिति रे॥ आयाहि मातुल . . .॥**
**धीरसमीरे यमुनातीरे**
**खेलति नृत्यति श्यामः।**
**एहि नयैनं बालसखायं**
**लसतु सदाऽभिरामः॥ आयाहि मातुल . . .॥**
**ललिता गीतिर्मधुरा प्रीतिः**
**सुखयत्विमं प्रकामम्।**
**लालय पालय चन्द्र निभालय**
**मम हृत्खण्डललामम्॥ आयाहि मातुल . . .।**

निद्रे! एहि, वत्सं मे स्वापय स्वापय। वत्स, नेत्रे निमीलय। पुनरप्यहं श्रावयामि –

**रात्रिर्गमिष्यति भविष्यति सुप्रभातम्**
**भास्वानुदेष्यति प्रदास्यति क्रीडनं ते।**

**विहाय रुदितं निद्रां भजस्व**

**दास्यामि तुभ्यं दुग्धौदनञ्च ॥**

अहो वात्सल्यं ! यतो हि जननी हृदि शिलां निधाय तनयस्य सुख-निद्रायै गीतं गायति। किञ्चित्कालानन्तरं बालकस्तु प्रसुप्तः किन्तु तयोर्भीतिभरिते नेत्रे क्व निद्रावकाशः ? चिन्ताचर्चिते चेतसि कुतः प्रसादः ? मनोवैक्लव्यमादायाश्रुप्रवाहश्चिन्ताग्नये शैत्यं प्रदातुमिव निर्जगाम। नेत्रे प्रमृज्य दीर्घं निःश्वस्यापि दम्पती मौनमेवाश्रित्य तस्थतुः। परस्परमाननसंसक्ता द्वयोरपि दृष्टिर्नैराश्यं व्यनक्ति स्म। तयोर्मनसि कृतपदा चिन्ता त्वेकैवासीत्– "न जाने किं भविष्यति। वयमपरेद्युः सूर्यं द्रक्ष्यामो न वेति।" यथा-यथा यमपाशसन्निभा यामा गहनतामभ्युपैति तथा तथा तयोर्दम्पत्योर्हृदयं दस्युराजस्यातङ्कत्रासः शल्यमिव व्यदारयति स्म। नैजस्यापि गृहस्येमाः भित्तयो ग्रसनाय विस्फारितमुखा इव तिष्ठन्ति। द्वारस्तम्भा दस्युराजस्याकृतिं धारयन्त इव प्रतीयन्ते। क्वचिदुत्थितो मनागपि ध्वनिर्भयमुत्पाद्य प्रश्वासं प्रमाणाधिकमेव तनुते। इदानीं सकलमपि जगच्छून्यमिव प्रतिभाति। क्षणमात्रमपि सहस्रयुगमिवासह्यदीर्घतां धारयति। कथं कश्चिदपीमां क्षपां न क्षपयति निमेषमात्रां विधाय ? एवमन्येऽपि बहवः खेददैन्यनैराश्यमयाः भावाः क्षणे-क्षणे मनसि जले बुद्बुदवदुत्पद्यन्ते विलीयन्ते च। क्वचिदपि मनः विश्रान्तिं न लभते स्म। इयं रात्रिस्तु सत्यमेव कालरात्रिः सञ्जाता। ईश्वर एव शरणमिति मतिं कृत्वा शून्ये दत्तदृष्टी तौ स्तब्धं तस्थातुः।

निस्तब्धे निशीथे यदा ते जनाः श्वासमप्यवरुद्ध्य सदैव रक्षाप्रहारमुद्रां विधाय सतर्काः सन्नद्धाश्चासन् तदैव दूरवर्तिषु गहनतमोमग्नेषु घूकोद्गतरव-शान्तिभग्नेषु वनखण्डेषु ग्रामसिंहानां बुक्काध्वनिरुत्थितः। किमागतास्ते दस्यव इति सर्वे सञ्जातशङ्का रोमाञ्चितशरीरास्तेषां नैकट्यं प्रतीक्षमाणास्तस्थुः किन्तु कुक्कुराणां शब्दैस्सममेव फेरुरवोऽप्यश्रूयत। तत्क्षणमेव तद्घोरं भयं हास्येन विगलितम्। व्यतीतेऽपि महति काले स दस्युराजो नागतः। तथापि सर्वं यथातथमासीत्। ते ग्रामवीराः सुदृढामभेद्यां रक्षापक्तिं निर्माय पविकठोरस्तम्भा इव विराजन्ते स्म।

अथ कृकवाकूनामुच्चैश्शब्दैः रात्रेरवसानं सूचितम् । सर्वेषां मानसेषु कोऽप्यपूर्वोऽभिनवाह्लाद आविर्भूतः । तथापि ते नावधानतां परित्यक्तवन्तः । शनैश्शनैर्ध्वस्ते ध्वान्ते, समुपजायमाने विटपविश्रान्तखगकुलकलरवे ईषदारक्त इव प्राचीनभोमण्डले, दस्युभयातङ्कोऽपि दिवाभीत इव क्वचित्प्रणष्टः। सर्वे हर्षघोषं चक्रुः। तस्यां ग्रामटिकायां सैका रात्रिरेवं व्यरंसीत् ।

ततस्तेषामेको वीरो बलदेवमाकार्य हर्षनिर्भरस्वरेण प्रोवाच–"गता सङ्कटवेला। विभाता खलु रजनी। एहि पश्य, अद्य कोऽप्यभिनवः सविता समुदेति।"

**अस्मिन् कलिमये काले कीदृशीयं विडम्बना !**
**चरन्ति दुर्जनाः प्रीताः भीताः सीदन्ति सज्जनाः ॥ १ ॥**

**आतङ्को निखिले लोके स्फुरत्येव समन्ततः ।**
**विशङ्कः शुभसङ्कल्पस्तस्योच्छेदं करिष्यति ॥ २ ॥**

**यः पठेच्छिवसङ्कल्पः प्रीतो नित्यं कथामिमाम् ।**
**तस्याऽऽतङ्कमयी बाधा कदाचिन्न भविष्यति ॥ ३ ॥**

## ॥ कर्तव्याघातः ॥

अस्ति भागीरथ्या उत्तरे तीरे मीरजापुरमण्डले एको ग्रामो वितताकारो बहुक्षेत्रफलाधिष्ठितश्च। जनबहुलोऽप्ययं ग्रामो न सघनतयैकत्रावस्थितवसतिः किन्तु निरस्तसातत्यवित्ततविकीर्णग्रामटिकारूपेणेतस्ततोऽनेकखण्डेषु विभाति। वर्षासु जलौघमदमेदुरा कूलङ्कषा सैषा भागीरथी स्वीयमशेषोपान्तप्रान्तं प्लावयति। तदानीं दूराद्दूरतरपर्यन्तमयं प्रदेशो, यो लोके 'कछार' इति विश्रुतो, धारामयो लघुसागर इव प्रतिभाति, यस्य पङ्कबालुकामये धूसरे जले प्रचण्डप्रवाहवेगोन्मूलितानि तृणतरुखण्डानि प्लवमानानि दृश्यन्ते। सुदूरभरे जलपूरे केवलं दीर्घवृक्षाग्रा उन्नतभूभागेष्ववस्थिता ग्रामा एव नेत्रपथमायान्ति। तादृशे प्रावृड्विषमकाले एते ग्रामास्तत्र लघुद्वीपतामुपयान्ति। प्रायेण प्रतिवर्षमेव सरित्तीरनिवासिनो जलप्लावनस्य सुमहद्घोरं शङ्कात्रासभयसङ्कुलं सकलजीवजीवातुसङ्कटं सहन्ते। रौद्रद्रववाहिनी ताण्डवनृत्तोद्धूतत्रिपुरारिजटाकलापनिष्यन्दिनी हिमगिरिनन्दिनी सागरसङ्गमिनी तडित्कशाघातैराहतानां विलपतां विद्रुतानां मेघानां वातायननयनसलिलसार-सम्भारं सम्भृत्यैव रोषावेशविवशेव सहस्रधाराभोगैः फूत्कुर्वन्ती भीषणतरङ्गजिह्वाः लपन्ती समग्रानपि लोकान् ग्रसितुं कालकरालव्यालीव वेगेन प्रसर्पति। तत्रत्याः जनाः कथंकथञ्चित्तानि दुर्दिनानि नयन्ति। स्वगृहे समाश्रिता अपि प्राणत्राणाया-हर्निशं परमेश्वरं ध्यायन्ति। अधस्तात्तावज्जलौघः उपरिष्टाच्च भास्करश्चण्डं तपति मेघो वा धारासारं वर्षति। जलप्लुतानां मृण्मयानां गृहाणामवपातस्तु प्रतिक्षणमा-शङ्क्यते। यथा यथा नद्याः जलस्तरो वर्धते तथा तथा तत्र जनानां प्राणा अपि कण्ठमुपयान्ति। एवं प्रावृट्काले नदीतीरस्येयमेव दशा भवति।

या गङ्गा नदी वर्षासु कूलस्थितानि कुलान्याकुलानि करोति, तेषां सस्यानि विनाशयति सैव नवाम्बुधारानीतैः रजःपटलैस्तानि भूक्षेत्राणि समाच्छाद्य तेषामुर्व-

रत्वाय नवत्वमुपायनीकरोति ।अतस्तानि क्षेत्राण्यन्नाकरा भवन्ति ।अनेनैव कारणेन नदीतीरवासिनो जनाः तं प्लावनसङ्कटं विपल्लवमपि न गणयन्ति।नदीतीर-वर्तिनी सोर्वरा भूरेकतो जनान् सुखयत्यपरतश्च दुःखमूलं वैमनस्यमप्युत्पादयति। प्रायेण प्रतिवर्षमेवावसिते जलप्लावने क्षेत्रफलाधिकारमधिकृत्य भूस्वामिनां विवादाः प्रादुर्भवन्ति यतो हि जलौघानीतं मृत्पटलं सर्वमेव क्षेत्रमाच्छादयति येन सीमान्त-भित्तयो विलुप्यन्ते। मात्स्यन्यायतः केचनान्यायिनो जनास्तत्रासहायनिर्बलानां भूमिमधिकुर्वन्ति सीमानमतिक्रम्य वा कर्षन्ति। यद्यपि परम्पराविनिश्चितानि चिह्नानि क्षेत्रपरिमापणे सीमानिर्धारणे वा साहाय्यं कुर्वन्ति किन्त्वमर्यादितलोभस्य क उपचारः ?

कदाचिदेतादृश एव विवादो नदीतीरस्थे तस्मिन् ग्रामे प्रादुर्भूतः। केश्चिदाततायिभिर्जनबलहीनस्यैकस्य कृषकस्य प्लावोद्भूतं भूखण्डं स्वायत्तीकृतम्। 'तव भूमिर्नद्यारुदरे विलीना, गच्छ त्वमपि तामेव शरणमि' ति ते तं भृशमुत्पीडितवन्तः। भूमिरेव कृषीवलानां जीवनमिति निजां मातृरूपां भूमिं श्वासशेषतां गत एव त्यक्ष्यामीति स मरणतुलाधिरूढो बभूव ।भूमी रक्ताभिषिक्ता मा भूदिति ग्रामजनास्तं न्यायालये वादं कर्तुं प्रबोधितवन्तः। प्रतिपक्षिणस्त्वातङ्कः सर्वत्र व्याप्त आसीत्। अतो न्यायालये तस्य निर्बलस्य कोऽपि वादसमर्थकः साक्षी वा न भवति स्म। प्रतिपक्षी तु सर्वविधसबलः समर्थश्चासीत् ।'यदि कोऽपि समर्थको मया नोपलभ्यते तदाहं वादपराजितो भविष्यामी' ति चिन्ता तं कृषीवलं दुर्बलतरं करोति स्म। भूमिस्त्वस्यैवेति सुविदितं तथ्यं जानन्तः सहानुभूतियुता अपि ग्रामवासिनः प्राणभयात्तस्य साहाय्यं विधातुं साहसं न कुर्वन्ति स्म ।सर्वतो नैराश्यमापन्नो विपन्नः स आपत्पयोधौ निमग्नो विषण्णहृदयो निर्दयं दैवमधिक्षिपन् मनस्येवमकरोत्-

"रे दैवहतक ! कस्य पापस्य दण्डं मह्यं ददासि ? कोऽयं ते न्यायः ? अस्मिन् निर्दये जीवलोके कथं कोऽपि निर्बलो जीवतु ? मानव एव मानवस्य शत्रुः।कारणं विना कार्यं न भवतीति शास्त्रवचनमपि मम विषये मिथ्यात्वं भजते। कलिकाले ईश्वरोऽपि सबलानामेव पूजां गृह्णाति। इदानीं कं शरणमुपयामि। नास्ति मे

कश्चिदपि सहायः। वित्तहीनोऽहं चित्तविहीनोऽपि भवामि।'' इत्येवं भूयो भूयो वितर्क्य शोकसंविग्नमानसो मुखमवनम्य यावत्तिष्ठति तावत्तस्य चेतसि सूचीभेद्यतमसि रश्मिरिव, निमज्जतो लघुतृणमिव, बुभुक्षाकुलस्यान्नकणिकेव, तृषार्तमरणासन्नस्य जलबिन्दुरिव, निरुद्धश्वासवतः प्राणवायुरिव, म्रियमाणस्य सुधासीकर इव, रोगातुरस्य च रामबाणभेषजमिव राघवस्याकृतिः प्रत्यक्षमिव विस्फुरति स्म।

तत्क्षणमेव स राघवस्य गृहं प्रति प्रतस्थे। यथा कर्णान्ताकृष्टचापनिर्गतो बाणः, क्वचिदांहारलक्ष्ये समापतन् श्येनस्तथैव सोऽप्युत्पत्यैव राघवद्वारदेशं प्राप्तुं वाञ्छति स्म। पादमूले पक्षमिवारोप्य स वियति बहुतरमुर्व्यां स्तोकमेव प्रयाति स्म। निमेषमात्रेणैव स राघवसम्मुख आसीत्। राघवस्तं तामवस्थांगतो दृष्ट्वा पप्रच्छ– ''कथं सोद्विग्नमिवालक्ष्यसे ?'' स कातरेण स्वरेण प्रोवाच– ''किं कथयामि ? सर्वं जानन्नपि किमेवं पृच्छसि ?''

मानवस्य रुचिवैचित्र्याद् ये गुणास्तस्मिन् समवेता भवन्ति, राघवस्तेषां जीविताकार एव। यष्टिरिव देहाकृतिं वीक्ष्य न कश्चित्तस्य प्राणसारतामनुमातुं शक्नोति। स केवलं चर्मणाच्छन्नास्थिपिञ्जरमूर्तिरस्ति। कथं तस्मिन् श्वासप्रश्वास-क्रिया निर्वर्तत इति जनास्तं सविस्मयं पश्यन्ति। किन्तु लघुकायेऽपि तस्मिन् प्राणिपिण्डे महामानवता विराजते। निरालस्ये तस्यास्ये सदैव हास्यं विभाति। विषमेऽपि समये न तस्य मनसि कश्मलं न वचसि दैन्यम्। धीरः सत्पुरुषः स सदैव सर्वेषां साहाय्यं विधातुं तत्परो भवति। क्वचिदप्यन्यायं नैव सहते। अविज्ञातस्यापि जनस्य सन्मित्रं, परोपकारपरायणो निर्लोभोऽजातशत्रुश्चापि स सर्वानुचितमेवोपदिशति। निद्राभयादिनियतिकृतनियमरहितः स नैष्ठिकब्रह्मचारी मुख्यतया चिकित्सककर्म करोति। विश्रुतसाफल्ययुतस्य तस्य जीवनस्य चरमो ध्येयोऽस्ति विपद्गतानां रोगातुराणां सर्वविधसेवा। रोगार्तानां चिकित्सा साक्षात्प्रभोरेवोपासनेत्यत्र काचिद्विचिकित्सा नास्ति। आदर्शपूतः परमकारुणि-कश्चिकित्सको राघवो मनागपि व्यवहारलाघवं न करोति। तस्य दृष्टिर्वर्णजातिधर्म-सम्प्रदायादिकं विहाय केवलं रोगं सुनिपुणं परीक्ष्य तस्य निदानं पश्यति। तस्य संज्ञतौ मृदुव्यवहारेण व्याधिविद्धानां दुःखार्धं स्वयमेवापयाति। तस्य करेण

रोगिणः करं विगृह्यमाणं पश्यन्नेव करालकालोऽपि भयकम्पितो भवति। भिषग्वरस्य राघवस्य करे सुमहद् यशो विराजते। अतस्तस्य धन्वन्तरिप्रतिष्ठा सर्वत्र जनमानसं स्पृशति।

समागतस्य कृषीवलस्य मुखवैवर्ण्यं निभाल्य तस्मिन् विश्वासश्वासं सन्निवेशयन् प्राणसञ्चारमकरोत् – "सर्वं जानामि। भवतु नाम, एष राघवस्तव न्यायालय-व्यवहारसहायो भवति। अपनय चिन्तादैन्यम्। भूखण्डस्तु तवैव; मम वचनं नान्यथा भवितुमर्हति। ते प्रज्ञापराधिनो निश्चितमेव पराजिताः।" कृषीवलो राघवं नाम मानवजीवं यथार्थं जानाति स्म। अतस्तस्योत्फुल्लनयनं वदनं प्रसादसदनं सञ्जातम्।

इयं वार्ता शुष्कवने दावानल इवाचिरेणैव ग्रामद्ग्रामेषु व्याप्ता बभूव। राघवस्यानवद्यं चरित्रं सर्वे जानन्ति। अतो नासीदत्र किमप्याश्चर्यं कुतूहलं वा। यदा प्रतिपक्षिजनकर्णविवरेषु तप्तसीसकद्रवनिभेयं वार्ता प्रविष्टा तदा तु तेषामाशाकमलवने धारासारस्तुषारः पपात। हस्तगतोऽपि पीनमीनोऽपसृत एव। नैराश्यतिमिराच्छन्ने मनसि स्थितः पापरूपो दुर्लभोन्मत्तलोभासुरो हुङ्कृतवान् – "राघवकण्टकविशोधनमेव वरं नान्यथा हस्तागता भूरियमनागतैव।"

अथैकदा निशीथे यदा राघवः स्वौषधिशालायां कञ्चिद् गभीरव्याधिविपन्नं जनं शुश्रूषमाण आसीत् तदैव सुदूरं सारमेयाणां बुक्काध्वनिरश्रूयत। 'कोऽप्य-साध्यरोगी तस्य परिजनो वा समायातीति राघवस्य मनः सतर्कं बभूव। नातिचिरात् सामीप्यवशादुपजायमानाद्विशिष्टध्वनिभेदाद्विनिश्चितं मोटरचक्रिकाया-नागमनम्। तस्यैव द्वारदेशं प्राप्य स्थगितस्य यानस्य ध्वनिरप्यवसितः। किञ्चित् क्षणं व्यतीत्य द्वारकपाटशृङ्खला खणखणायिता बभूव। राघवः सत्वरं द्वारकपाटमुद्घाट्य यावत्पश्यति तावद् द्वे मोटरचक्रिकायाने त्रयश्च सायुधाः पुरुषास्तत्र दृष्टौ समापतिताः। तेष्वेको राघवमुपसर्प्य सादरं प्रणम्य निवेद-यामास – "मान्यवर, भवतो बालसखो दुर्जयप्रसाद इदानीमेव सर्पदंष्टो विष-मूर्च्छितो निश्चेष्टतां भजते। शीघ्रं प्रचलतु भवान् तस्य प्राणरक्षणाये" ति तस्य

वाक्यावसानमप्रतीक्ष्यैव त्वरितोपचारोपक्रमाय राघवः सत्वरं गृहं प्रविश्य, यथोपयोगोचिता ओषधीः मञ्जूषायां निधाय तत्रावस्थितस्य रोगिणः परिचर्यायामेकं जनं नियोज्य तैस्सङ्गतो निर्ययौ।

मोटरचक्रिकायानवेगवशात्तेऽचिरमेव तस्माद्ग्रामभागाद् विनिःसृत्यान्यं ग्राममार्गमनुसृतवन्तः। "नायं दुर्जयप्रसादस्य गृहमार्ग" इति राघवे कथिते चालकोऽब्रवीत् – "स मार्गस्तु काभिश्चित् सेचनजलप्रणालिकाभिर्विकृतः। अतः किञ्चित् परिभ्रम्यान्येन मार्गेण नयामः।" राघवस्तूष्णीको जातः। द्वे अपि मोटरचक्रिकायाने ग्रामाद्दूरं निर्जनमेकं नलकूपास्थानं प्राप्य विरतगतिके बभूवतुः। "अस्त्यत्र दुर्जयप्रसादः ? अत्र तु किञ्चिदपि नालक्ष्यते" इति विस्मयमानमानसो राघवस्तान् जनान् पृच्छन् यानादवातरत्। तेष्वेको राघवमब्रवीत् – "नास्त्यत्रदुर्जयप्रसादः। नापि स सर्पेण दंष्टः। भवन्तं निहन्तुकामा वयमत्रानीतवन्तः। किं भवानस्मान्नाभिजानाति ? के वयमि"ति।

एतच्छ्रुत्वा बहूनां प्राणरक्षकः स राघवः प्राणमोहाय तिलाञ्जलिं समर्पयन्निव भयायाप्यभयं प्रयच्छन्निव धीरेण प्रोवाच – "जानामि, सम्यग् जानामि। भवन्त एव तस्य कृषीवलस्य भूखण्डापहारकाः। भवतां त्रासभयान्न कोऽपि तस्य साहाय्यं विदधाति। न्याये निर्बलस्याविश्वासो मा भूदिति मया तस्य पक्षो गृहीतः। सन्मार्गे क्रमतो मे महाकालादपि भीतिर्न भवति।" ततः सोऽवादीत् – "अस्मान् जानन्नपि भवान् कथमस्माभिस्सह प्रचलितः ? ईषदपि विवेको न विमृष्टः ?" राघवस्तथैव प्राह – "प्रथमोऽहं मनुष्यस्ततश्चिकित्सकस्ततश्च कोऽप्यन्यः। वस्तुतः स एव नरो यो नरेभ्यो जीवति प्राणांश्चोत्सृजति। एष सनातनो धर्मः। चिकित्सकस्य प्रथमं कर्तव्यं यन्निर्लोभवृत्त्या सर्वात्मना प्रयत्नेन कस्यचिदप्यातुरस्य रोगनिदानं प्राणरक्षणं विधेयम्। कष्टापन्नातुरस्तु न मित्रं भवति नापि शत्रुः। तस्य कृते यत्किञ्चिदपि क्रियते तत्सर्वं परमेश्वराय निवेद्यत इति मत्वैवास्मिन् कर्मणि प्रवृत्तोऽस्मि। मा स्यादेवं किन्त्वस्यां स्थितावपि यदि भवानेव सद्यः तां काञ्चिद्दशामवाप्नोतु यस्यां मयोपचारः कर्तव्यः, तदा जानन्नपि

यद्भवान् स्वस्थो भूत्वा मां यमसदनं प्रेषयिष्यति, अविलम्बमेवोपचारं विधास्यामि। अन्यथा मे कर्त्तव्याघातो मां न त्यक्ष्यति। अतोऽहं भवतां वचनेन दुर्जयप्रसादस्य तां पीडां स्वीयामिव मन्यमानः स्वकर्तव्यनिष्ठाप्रतिज्ञां निर्वोढुं तस्योपचारार्थं भवद्भिस्सह प्रचलितः। दिष्ट्या कर्तव्याघातादुद्धृतोऽस्मि। कुर्वन्तु कण्टकविशोधनमपहरन्तु मे प्राणानिति।"

राघवस्य मानवतां कर्तव्यनिष्ठां चालक्ष्य धर्मयुतं च निर्भयवचनं निशम्य तेषां हृत्परिवर्तनं जातम्। मनसः कालुष्यं प्रक्षालयन्निव ते साश्रुनयना अपराधबोधव्रीडावन्तो राघवस्य चरणयोर्निपेतुः। केवलं सस्मितं तारामण्डलमेव तत्सर्वं ददर्श।

अथ विमलचित्तान् तान् सस्नेहमालिङ्ग्य राघवः सम्यक् प्रबोधयामास। कस्यचित्कर्तव्याघातो मा भवत्विति निर्दिदेश चैतद्वृत्तं कस्मैश्चिन्नाख्यातुं येन विश्वासस्य मर्यादा न विनश्यतु।

अपरेद्युः प्रसन्नमुखः स कृषीवलो राघवमुपेत्य, "ते दुर्दम्याः स्वयमागत्य भूखण्डाधिकारं मह्यं समर्प्य गतवन्त" इति विदितवृत्तान्तं कृत्वा सप्रश्रयमुवाच – "नाहमेतच्चमत्काररहस्यमधिगन्तुं पारयामि किन्तु सर्व एव तवैव प्रभाव इति मे दृढो विश्वासः॥" इति॥

**राघव आततायी च समाजे च कृषीवलः।**
**एवमन्येऽपि दृश्यन्ते तादृशा हि समन्ततः॥१॥**

**कथायां गर्भितं तत्त्वं चरित्रं वृत्तिरेव च।**
**प्रीतिं करोति सर्वेषां सुधियां च विशेषतः॥२॥**

**निर्बलस्य सहायो यः कर्मनिष्ठापरश्च यः।**
**मा भूद्विचलितः सोऽपि कर्तव्याघातपीडितः॥३॥**

**इयं सत्यकथा प्रोक्ता पात्रस्थानविभेदतः।**
**सांमनस्यं करोत्वेषा कृत्वा हृत्परिवर्तनम्॥४॥**

●

# ॥ अभिज्ञानम् ॥

तस्मिन् दिने न जाने कुतः कथमिव तादृशः सम्मर्दः समायातः। रेलशकट्याः सर्वाणि यानानि महता सम्मर्देनाकुलान्यासन्। तत्र सर्षपस्यापि गतिर्नासीत्। यदपि विश्रामस्थानं सा रेलशकटी समायाति स्म, तत्रत्या रेलयात्रिणः तां साश्चर्यं दृष्ट्वा भृशं भयकम्पिता भवन्ति स्म कथं कोऽपि यानमारुह्यान्तः प्रविशेदिति। तत्रागत्य यावत्सा मन्दगतिर्भूत्वा शनैः शनैरुपरमेत् तावदेव यात्रिणां समूहः यानद्वारमुपसर्प्य यथाकथञ्चिदन्तर्वर्ती भवितुं सर्वात्मना प्रयतते। कुत्रचिद्द्वारदेश एव सङ्घर्षस्य घोरा स्थितिरुत्पद्यते स्म। केचन सङ्घट्टमाना अन्तःप्रविष्टा अपि जनाक्रोशस्य लक्ष्यतामुपयाता व्यथन्ते। केचन द्वारदेशाद्बहिरेव कथमपि दत्तहस्तावलम्बाः पादैकस्तम्भायमाना महत्कष्टमनुभूयन्तोऽपि यानारोहणसोपान एव लम्बिताः स्थीयन्ते। केचन प्राणानविगणय्य यानोपरि तिष्ठन्ति रिक्तहस्ता जनाः कथमपि शरीरमात्रेण तत्र स्वस्थितिं विधातुं महतायासेन कृतोद्योगा आसन् किन्तु ये भारसनाथास्तेषां तु कथैव का? समुपलभ्याऽप्यन्येषां साहाय्यं ते यानारोहणे नासन् समर्थाः। शक्तिमन्तो बलवन्तो युवानो बलादेव यानं प्रवेष्टुं परेषां पीडने सङ्कोचं नाकुर्वन्। प्रबलानां सङ्कटं विलोक्य निर्बला अबलाश्च यानं द्रष्टुमपि नोत्सहन्ते स्म। ये बालका ये च वृद्धास्तेऽपि सम्मर्दभीतास्त्रस्ता मनागपि यानं प्रति पदक्रमणाय नोत्सहन्ते स्म। ये नित्ययात्रिणः कार्यतस्तत्र तत्र गत्वा सायङ्काले पुनरावर्तन्ते तेऽप्यद्य यात्राभङ्गप्रसङ्गमवबुद्ध्याऽकस्मिकावकाशसङ्कल्पमानसाः बभूवुः। एको दधिपूर्णं मृद्भाण्डं करकलितं शिरसि विधृत्य यानप्रवेशाय यदोद्योगपरोऽभवत्तदैव द्वारशीर्षसङ्घट्टेन भग्नाद्भाण्डात् सर्वं तस्यान्येषां च शरीरे पतितम्। दधिनाशात्तस्य वेदनाविकृतं वक्त्रं दधिलेपशबलञ्च वस्त्रं दर्शं दर्शं सर्वे हास्यनिर्झरताङ्गताः। तं परिवृत्य ये जना आसन् तेषामपि वस्त्राणि दधिभद्रतां गतानि। सरोषास्ते दधिधारकमपवदन्ति स्म। एकः प्रसेवे पक्वानि रक्तवृन्ताकफलानि (लोके टमाटर इति) समादाय तस्मिन् यानसम्मर्दे गन्तुमीहते स्म। स तु नैव गतः किन्तु फलानि गतानि। प्रसेवात् फलरसनिष्यन्दः

तस्य विगलितं हृदयमिवादाय बहिरागतः। कस्यचित्पोट्टलिका सम्मर्दपिष्टा षर्पटिकाऽभूत् । एकस्योपनेत्रं कर्णाभ्यां च्युतं चूर्णताङ्गतम् । एतादृशीं विषमावस्थां विसह्यमाना सा रेलशकटी भूरिभारभराक्रान्ताऽपि वृद्धा हस्तिनीव शनैश्शनैस्तस्माद् विश्रामस्थलादपसर्तुमारब्धवती ।

एतस्मिन्नन्तरे यानस्था जनाः पश्यन्ति वृद्धमेकं यो दूरादपि करेण स्थगनमुद्रां विधाय तां रेलशकटीमभिलक्ष्य यथाशक्ति धावन्निव समागच्छति स्म। तं तथागच्छन्तं वपुवृद्धं विलोक्य सर्व एव सदयाऽभवन्नियं रेलशकटी विरमेदिति। पिपीलिकागतिमपि विलज्जयन्ती सा रेलशकटी न जाने कथं निरुद्धा ! मन्येऽहं, रेलशकटीचालकेन केनाभिरक्षकेन वा केनापि यात्रिणा वा साऽवरुद्धा । एतद्दृष्ट्वा समाश्वस्तोऽपि नातिविश्वस्तः स वृद्धस्तथैव त्वरितपदः शकटीं सम्प्राप्तः । क्वेदानीं गच्छतु, कस्मिन् याने समारोहत्विति समस्या तत्समक्षं प्रादुरासीद्यतो हि सर्वाणि बुशभाण्डारनिभानि नैकाय तृणायाऽपि रिक्तान्यासन् । ततो मदीययानस्य द्वारवर्तिभिः यात्रिभिः दोर्भ्यां विगृह्य स कथञ्चिदुद्दोहविधिना जनानां स्कन्धेषु परिसर्पन् यानान्तर्भागे प्रापितः।

यानस्यान्तर्वृत्तमनिर्वचनीयमासीत् । तिलमात्रमपि स्थानं नासीत्तत्र रिक्तम् । आसनेषु परस्परं संसक्ता यात्रिणः क्षेत्रेषु सघनसस्यपादपा इव प्रतिभान्ति स्म । आसनानामुपरिवर्तिषु भारस्थानेष्वपि जना उदुम्बरशाखासु फलानीव संसक्तान्यासन् । आसनानां मध्यवर्तिस्थानेष्वपि केचिदेकपादावलम्बिनः केचिदुन्नतग्रीवाः केचिदासनपृष्ठाश्रिताः कथं कथञ्चित् स्थितिं विधाय नैजान्यवतरणस्थलानि प्रतीक्षन्ते स्म । सम्मर्दावरोधवशाद् गवाक्षादपि किञ्चिद्बहिर्गतं दृश्यं नावलोक्यते । याने विचित्रं कोलाहलं व्याप्तमासीत् । आसनेष्वस्थिता जना अपि सौख्यं नावहन् । केवलं तत्रैकस्मिन्नेवासने गृहीतपर्याप्तावकाशाः स्थिताश्चत्वारो यात्रिणः ससुखं स्मितपूर्वकमुत्फुल्लगल्लैरालापं कुर्वन्ति स्म । अविदितयानसम्मर्दविषमविषया इव ते स्वीयचर्चानन्दसागरे निमग्ना आसन् । तेषां निरपेक्षतां वीक्ष्यानुमीयते यत्ते शकट्या अन्तिमविश्रामस्थानपर्यन्तं यास्यन्ति । चतुर्षु तेषु यात्रिष्वेकाऽनवद्यरूपराशि-राजिता रुचिरालङ्कारभ्राजिता भव्यभावभूषिता कोकिलकलकूजिता सुदती युवती युवानश्चान्ये चारुचिकुरचयाः कमनीयकलेवराः । वचोवेशविन्यासेन ते भद्रवर्गीया इव प्रतीयन्ते । मन्ये, अन्येभ्यो यात्रिभ्यस्तेषां हृदये सहानुभूतिर्नासीत् । न जाने

कथमिव कष्टमनुभवन्नपि कश्चित्तान् स्थानमुपवेशनाय न याचते। तेऽपि स्वयमेवं कर्तुमप्रवृत्ता आसन्।

इदानीं रेलशकटी वेगेन धावति स्म। तस्या वेगप्रभावाज्जनाः परस्परं संसक्ता अपि कथञ्चिल्लब्धावकाशाः स्वे-स्वे स्थाने तथैव सुस्थिता अभवन् यथा भाण्डप्रणोदनैर्निष्ठानानि। सोऽपि वृद्धः सायासप्रयत्नेन यात्रिणां करुणसाहाय्येन तमासनमुपस्थापितो यत्र ते चत्वारो युवानो यात्रिणः ससुखं परिचर्चामनुतिष्ठन्ति स्म। महता कष्टेन तत्र गतो वृद्धो दृष्ट्वा हर्षमवाप तत् सुलभावकाशमासनम्। वृद्धस्य प्रश्वास इदानीमपि लौहकारस्य भस्त्रेव प्रचलति स्म। क्षीणकायः स खिन्नः स्वेदक्लिन्नः कामपि सुखावस्थामीहमानस्तान् निवेदयामास-"प्रिया युवानः! अस्त्येव तादृशोऽवकाशस्तत्रासने येनैको जनः ससुखं तत्र स्थातुं शक्नोति। अतो यदि भवन्तो मामनुमन्यन्ते, तत्राऽहं स्थातुमिच्छामि। ममावस्थानाद्भवतां कष्टं नोत्पत्स्यते। भवन्तः पश्यन्त्येव यादृशोऽहं जराजीर्णः। रेलशकटीं प्राप्तुं धावनवशान्मे शक्तिः क्षीणताङ्गतैव। मदीये पादयोर्महतीवेदना वेपथुश्च जायते। भवतां कृपाकणिकाऽपि मामास्याः दुरवस्थाया उद्धृत्य त्रातुं समर्था। अतो दीयतां मेऽवकाशः।" ते युवानस्तस्य दीनवचसि कर्णमकृत्वैव तथैवालापरसनिमग्नास्तस्थुः। तेषामुपेक्षामभिलक्ष्यापि स वृद्धः कष्टं सोढुमसमर्थः पुनरपि तांस्तथैवार्त्तस्वरेण प्रार्थयामास। ततस्तेभ्य एको, "रे वृद्धापसद! तूष्णीं तिष्ठ। एकतोऽस्मिन् सम्मर्ददूषिते यानेऽस्माकं श्वसनमपि कृच्छ्रसाध्यमपरतः कटुरटनेन शिरोवेदनां वर्धयसि। अत्र कुत्र त्वया रिक्तस्थानं दृश्यते? एहि, शिरांस्यारुह्यास्माकं तिष्ठ"– इत्युक्त्वा तं वृद्धं नेत्राग्निा दाहयन्निव सरोषं क्रूरमवलोकयामास। वृद्धो वराकोऽप्रत्याशितं परुषवचनं वज्राघातनिभमुत्तरं निशम्य हताशया कृतकदननिमीलितनयनं दीनवदनमधश्चकार। स युवा तस्य मित्राणि च विजयमुद्रामिव प्रदर्शयन्तः परस्परमवलोक्य स्मिताननना बभूवुः। तेषां युवजनानां तादृशं क्रूरं रूक्षञ्चामानवीयं व्यवहारं विलोक्य समानान्तरसम्मुखासन उपविष्ट एकः प्रौढो यात्री उत्थाय महतादरेण तं वृद्धं स्वस्थाने निवेशयामास। सुस्थः स वृद्धस्तस्मै प्रसन्नमनसा बहून्याशीर्वचांसि प्रयोजयामास। समुत्थितः स प्रौढस्तान् युवजनानभिलक्ष्यान्योक्तिभङ्ग्या सर्वान् श्रावयन्निवोच्चैर्वक्तुमारेभे–"यस्मिन् समाजे वृद्धजनानां समादरो न स्यात्स समाजोऽचिरमेव गर्ते पतति। अद्य ये युवानः कालान्तरे त एव वृद्धाः

संजायन्ते। तदानीं सभाजनमवाप्तुमिदानीं तदनुरूपो व्यवहारो युवजनैर्विधेयः। स्वयं भगवता श्रीकृष्णेन गीतायामुक्तम्–

**"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥"**

यदि मानव एव मानवस्य साहाय्यं न विधास्यति किं पशवो वनस्पतयो वा तथाकरिष्यन्ति ? निरर्थका सा शक्तिर्व्यर्थं च तद्बलं यत्कस्यचिद्रक्षणाय न प्रयुक्तम्। इदं रेलयानं नास्ति कस्यचिदेकस्य। सार्वजनिकमेतत्। आगते सति स्वाभीष्टे स्थले किं वयं यानमेवादाय गच्छामः ? अरे, कियन्मात्रं समयमत्र व्यतीत्य एवैतत्परित्यज्य गमिष्यंति। अतोऽत्र परस्परं सौहार्देन भाव्यम्। एष एव मानवधर्मः। किञ्चित्कष्टमनुभूय कस्मैश्चित्सुखं सौविध्यं वा दातुं प्रयतनीय-मेतद्वरमवश्यमेव कार्यम्।"

एतच्छ्रुत्वा तेष्वेको युवा तं प्रौढमधिक्षिपन् सक्रोधं जगाद–"स्वीयमुपदेशं स्वयमेव स्थापय। अनभ्यस्ताः खलु वयं यस्य कस्यचिदुपदेशश्रवणस्य। यो यत्करोति तत्फलं स एव भुङ्क्ते। त्वमसि धर्मात्मोदारहृदयः परोपकारी, नैतादृशा वयम्। यद्येतादृशी सहानुभूतिरस्माभिरङ्गीकृता तदा वयं रेलयात्रां कर्तुं न पारयामः। न जाने कियन्तो वृद्धास्सन्त्येतादृशा अस्मिन् याने। कस्य कस्य दुःखमपाकर्तुं शक्नुमः। संसारस्तु दुःखालय एव। अतः खलु स्वार्थमूलं सुखं जीवेदिति ह्यस्माकं सिद्धान्तः। अस्माकं रसालेऽस्थीनि मा विनियोजय।" ततश्च स प्रौढः पुनरपि किञ्चिद् वक्तुकामस्तं युवानं सम्बोधयामास किन्तु कश्चिदपरः "अलं विवादेन। उपदेशो मूर्खाणां प्रकोपायैव भवति। नोचिता पाषाणहृदयैस्सह वचोवद्धते" ति प्रौढं निषिद्ध्य माध्यस्थ्यं निर्व्यूढवान्। युवानः पुनर्वाग्व्यापारे संलग्ना बभूवुः।

यद्यपि शकटीरवेण बाधितो जनकोलाहलेन च मन्दीकृतस्तेषामालपस्वरः सर्वेषां कर्णानां विषयो नासीत्तथापि विश्रब्धं कर्णं दत्त्वा कश्चिदपि श्रोतुं शक्नोति। ते त्रयोऽपि युवानो कमपि कथाग्रन्थमाश्रित्य परस्परमालपलीलया मनोविनोदं कालक्षेपञ्च कुर्वन्ति स्म। तेष्वेकस्य करे कथाग्रन्थोऽभूद्यस्य मनोरम आवरणे 'अग्निशिखा' इति नाम सुमुद्रितमासीत्। एकस्तत्कथावैशिष्ट्यं विवृण्वन्नाह–"अहो वस्तुयोजना ! असकृत्पठनादपि तृप्तिर्नैव जायते। पौराणिकं वस्त्वादाय यदाधुनिकैस्सन्दर्भैः विशदीकृतं तन्मेऽद्भुतं प्रतिभाति। कथाया यानि

मूलतत्त्वानि तानि सर्वाण्येवात्र विराजन्ते। संवादास्तु श्रुतिसिद्धान्तवाक्यतां यान्ति। नायिकाया उद्दामयौवनाग्निशिखायां बहवस्तरुणाः शलभायिताः किन्तु नायकस्तामग्निशिखां स्वायत्तीकृत्य तयैव वासनां निर्दाह्य प्रेम्णस्तप्तावदातवर्णं स्वर्णमाविष्करोति। भोग्या वासनामूर्ती रमणी कथमनवद्यप्रेम्णा समुपास्या देवी भवतीति ज्ञातुमयं कथाग्रन्थ उपनिषदेव। घटनासु काप्यपूर्वाऽन्वितिरत्र विराजते। कोऽप्यभिनवः कथारसो विलसति, काचिद् विलक्षणा विच्छित्तिः समुदेति। जगतः कश्चिदपि श्रेष्ठतमः पुरस्कारोऽस्मै कथाकाव्याय न्यून एव।''

ततस्तेषु तृतीयस्तं प्रशंसाभाजनं ग्रन्थरत्नं हस्ते समादाय तोलयन्निव प्रीतिविस्फारितनेत्रः सन् सद्भावभावितान्तःकरणादुद्धृत्येव स्वीयां प्रशस्तिं व्याहृतवान्– ''पात्राणां चरित्रचित्रणे महत्कौशलं कलितं लेखकेन विशेषतो नायकस्य चरित्रं त्वपूर्वं महनीयं कल्पनातीतम्। स्वयं लेखक एव नायकत्वमङ्गीकृत्य नैजं जीवनदर्शनमत्र संरोपितमिति मे प्रतिभाति। धीरोदात्ततायाः परा कोटिः समुल्लसति। यथा कोऽपि चित्रकारो महता मनोयोगेन सकलकलाकलापलावण्येन किमपि विचित्रं चित्रं निर्माय तूलिकया तद्विविधवर्णानुयोगेन नितान्तैकान्त-कान्तं करोति, मन्ये तथैवायं कथाकारः स्वीयं कथाशिल्पं वैशिष्ट्यस्य तमुच्चशिखरं प्रापयति यत्र गन्तुं न कोऽप्यन्यः कथाकृत् प्रभवति। यद्ययं महनीयो लेखकशिरोमणिर्मिलति, तस्य चरणयोः निपत्य तमभिनन्दामि।

यथा यथा ते युवानः कथाग्रन्थवैशिष्ट्यं प्रशंसन्ति तत्कर्तृत्वं चाभिनन्दन्ति तथा तथा समक्षमुपविष्टस्य तस्य वृद्धस्य नेत्रयोरुल्लासो विद्योतते स्म। तस्य वदनं प्रसादसदनं विलोक्य स्पष्टं ज्ञायते यत् सम्मर्दावसादोऽवमाननाविषादोऽन्तःकरणमुन्मुच्य न जाने क्व गतौ। तस्य यात्राश्रमः कृतार्थतां गत इव। जराजीर्णेषु शिथिलेषु तस्याङ्गेषु काचिदनिर्वचनीया स्फूर्तिः समुज्जृम्भति स्म। अधरौष्ठयोः स्मितिविलासो ललास।

आगते सति कस्मिंश्चिद् विश्रामस्थले तस्माद्यानात् बहवो यात्रिणोऽवातरन्। अतस्तयोरासनयोर्मध्ये स्थितानां जनानां पादप्राकारो विगलितः। अथ द्वयोरासनयोर्यात्रिणः परस्परं साम्मुख्यमवापुः। तत्र कियन्मात्रं विश्रम्य रेलशकटी पुनर्धावितुमारब्धवती। शकटीवेगारम्भाघातप्रभावात् स कथाग्रन्थस्तस्य युवजनस्य कराद् विभ्रष्टो यानकुट्टिमे वृद्धस्य च तस्योपचरणं पपात। यावत् स युवा तं

ग्रन्थमादातुं करं प्रसार्यावनमति तावत्तस्य दृष्टिः वृद्धस्याननं स्पृशन्निव ग्रन्थस्य पृष्ठावरणे मुद्रितस्य लेखकचित्रस्योपरि गत्वा स्थगिता। ततश्च स स्वीयं मुखमुन्नमय्य वृद्धस्याननं पश्चाच्च ग्रन्थावरणे लेखकचित्रं भूयोभूयः पश्यति। पुनश्च ग्रन्थमादाय सुस्थः स वृद्धस्य वक्त्रे दत्तदृष्टिरभवत्। तस्य सर्वाणि मित्राणि साश्चर्यमुत्फुल्लनेत्राणि विवृतमुखानि च बभूवुः यदा ते तस्मिन् चित्रे वृद्धस्य च मुखे निरतिशयं साम्यमवलोकयामासुः। "किं नामायमेव लेखकोऽस्य कथाग्रन्थस्य यो विगतक्षणेष्वस्माभिर्निराकृतः। आह दैव, किं कृतं त्वया ? कोऽयमस्माकं प्रज्ञापराधः ? मुखावरणाय न कुत्रचिदवकाश" इति तेषां सर्वेषां मनः-स्थितिर्जाता। तेषां मनोभावमनुभवमहिम्ना विज्ञाय स वृद्धः स्वयमेव महता स्नेहेन तेषां व्रीडां निवारयामास – "अलं पश्चात्तापेन लज्जया वा वत्साः! एष संसारः। अभिज्ञानं विना कः कं ज्ञातुं प्रभवति ? अहमेवास्याः कथासृष्टेः प्रजापतिः।"

वृद्धस्य वचनविरामसमनन्तरमेव ते सर्वे युवानः पश्चात्तापविगलितान्तःकरणास्तस्य चरणयोर्निपेतुः॥

**हन्त हा भारते नित्यं जनसङ्ख्याऽभिवर्धनम्!**
**सर्वकालेषु सर्वत्र सम्मर्दः परिदृश्यते॥१॥**
**जनसङ्ख्यातिभारेण सततं पीड्यते धरा।**
**अतो हि न्यूनतामेति कश्चिदप्युत्तमो विधिः॥२॥**
**मार्गेषु सर्वयानेषु संस्थानेष्वापणेषु वा।**
**यत्र पश्यतु सर्वत्र सम्मर्दस्य विडम्बना॥३॥**
**यदि त्वेवं भविष्येऽपि जनसङ्ख्या प्रवर्धते।**
**वैनाशिकी समुत्पन्ना स्थितिर्नूनं भयावहा॥४॥**
**कथायां रेलयाने यद् दृश्यं सर्वैर्विलोकितम्।**
**तत्करोति मनुष्याणामभिज्ञानविनाशनम्॥५॥**
**अतो हे मानवाः सर्वे क्रियतां स तथा विधिः।**
**यथा जीवाः सुखं लोके समानं विचरन्तु वै॥६॥**
**यो वा को वा भवेद् वृद्धः श्रान्त आर्त्तो विशेषतः।**
**सर्वथा सर्वकालेषु सर्वैः सेव्यः सुपूजितः॥७॥**

**॥इति डॉ० प्रभुनाथद्विवेदिकृतोऽयं कथाग्रन्थः सम्पूर्णः॥**

●

